बाहुशालिन् ! भानुमण्डलसवर्ण ! शरवणतटाकोत्फुल्लसरोजकुसुम-सम्भव !

## २. स्तुतिगाथाः 13-21

"लोकसंहारकृत्परमेश्वरकुमार ! रक्तशूलपाणे ! पुराणपुरुष! लोकनायक !" इतीत्थं त्वन्नामोच्चारणपूर्वकं उत्सवकालेषु भूताविष्टाचित्तैरर्चकैरुच्यमानाः त्वत्स्तुतिबोधकगाथा बह्व्यः सन्ति ।

सर्वव्यापकत्वेन नानारूपरहितत्वेन लोकनायकत्वेन च वेदान्तेषु तवोद्घुष्यमाणत्वात् नामरूपपराः पूर्वोक्तगाथार्थाः न सत्या भवितुमर्हन्ति। स्तुतिपाठकैः नानारूपसम्पन्नत्वेन तव स्तूयमानत्वात्, पूर्वोक्तगाथार्था नाप्यसत्या भवितुमर्हन्ति। भावनाभेदेनोभयविधार्थस्य सम्भवात् पूर्वोत्तरविरोधो नात्र प्रसज्यते ।

## ३. त्रिपुरसंहारः 22-28

भूमिरेव रथः। वेदा एव हयाः। चोदनपटुः ब्रह्मा स्वयमत्र सारथिः । रथमेनमधिरूढः परमशिवो हिमाद्रिरूपं धनुर्गृह्णन् तन्निबद्धं वासुकिरूपं बाणं त्रिपुरमुद्दिश्य प्रेषयति । अनलकल्पोऽयं बाणः सर्वा दिशो दहन् वेगेन गत्वा त्रिपुरमदहत् । दक्षप्रजापतियज्ञे कमनीयनयनः परमशिवः स्वीयं हविर्भागं स्वीचकार। तदनु पर्वतराजपुत्रीं पार्वतीमुपयेमे ॥

## ४. षण्मुखजननम् 29-54

कृतोद्वाहः परमशिव उमायां दीर्घसुरतोद्युक्तमना बभूव। ज्वलन्मणिगणाविद्धभूषणालङ्कृतः, क्रतुशतानुष्ठानलब्धदेवराजपदो देवेन्द्रः, अनलसमाऽनिमेषफालनेत्रयुतं परमशिवं दृष्ट्वा वरमेनमयाचत "प्रभो! गर्भोऽयं भिद्यताम्' इति। सत्यसन्धः प्रतिज्ञाभङ्गभीरुश्च स परमशिवस्तथेत्युक्त्वा सप्तलोकानाश्चर्यसागरे निमज्जयन्, अग्निप्रभोपेतेन कुठारेण गर्भं छित्त्वेन्द्रायायच्छत्. इन्द्रप्रतिनिधिभूताः सप्तर्षयः छिन्नगर्भशकलं स्वयमगृह्णन्। पार्वतीगर्भाद्बहिरागतोऽयं गर्भशकलो देवसेनापतिर्भविष्यतीतीदं रहस्यं ज्ञानदृष्ट्या मुनयो ज्ञातवन्तः। मांसपिण्डमेनं स्वभार्याः गर्भे धारयित्वा यदि वर्धयेयुः तर्हि तासां पातिव्रत्यभङ्गो भवेदिति पर्यालोच्य, अग्निभगवानेव वोढुमेनं समर्थ इत्यन्ते निश्चित्य तत्कृते सप्तर्षयो यागं कर्तुमैच्छन्। सप्तर्षिभिर्वह्नौ हुताः गर्भपिण्डशकलाः त्रेताग्निशकलाः सन्तः पुरोडाशसंज्ञामभजन्।

आकाशोत्तरभागे नक्षत्ररूपेण स्थितां वसिष्ठपत्नीं पतिव्रतोत्तमामरुन्धतीमन्तरा कृत्तिकानामधेया अन्याः सप्तर्षिपत्न्यः पुरोडाशात्मना परिणतं गर्भपिण्डं बुभुजिरे। भर्तुरनुमत्या पुरोडाशात्मना परिणतस्य शकलस्य ताभिः निर्दुष्टपातिव्रत्योपेताभिः षड्भिः ऋषिपत्नीभिर्भक्षणात् तासां पातिव्रत्यभङ्गदोषोनैव प्रसज्यते।

दिवमभिव्याभ्योन्नतो हिमाचलः। तत्र नीलकुसुमजुष्टः शरवण-नामा महाह्रदः। प्रफुल्लपद्मप्रसूनोपरि तास्त्वां सुषुविरे। हे लोक-प्रथित षण्मुख! तासां प्रसवानन्तरं अनन्यलभ्यवाञ्छितसौभाग्य-सम्पन्नः शतमखो विस्मृतपूर्वप्रतिज्ञः सत्वरमेत्यानलकान्तियुत-वज्रायुधेन तान् चिच्छेद। तेन च वज्राभिघातेन प्रथमं षडा-कारेणावतीर्णस्त्वं पश्चात् षण्मुखो भूत्वा एकाकारेण परिण-तोऽसि। इन्द्रं च जितवानसि।

### ५. कुमाराय देवकृतक्रीडनकदानम् *55-70*

लीलया केवलं बाल्यावस्थायामेव युद्धमकरोः आयुध-ग्रहणापक्ववयस्कस्य ते पुरतः स्थातुमशक्तः शचीपतिः पलायाम्ब-भूव। अयमेव कुमारो देवसेनापतिर्भविष्यतीति देवाः सर्वेऽ-मन्यन्त। युद्धपराजितैः, जयशालिने पारितोषिकवस्तुदानं सम्प्रदाय-सिद्धं। तदनुसारेण प्रहृष्टो वह्निदेवः स्वशरीरावयवमेकं भित्त्वा भिन्नावयवेन कुक्कुटं निर्माय तुभ्यमदात्। सर्वसौभाग्य-सम्पन्नः स्वर्लोकाधिपतिः पाकशासनः निजशरीरावयवमेकं भित्त्वा तेन रम्यबिन्दुभूषितं चारुपिञ्छाञ्चितगात्रं मयूरमेकं निर्माय तुभ्यं ददौ। दुष्टनिग्रहशीलो धर्मराजः छिन्ननिजगात्र-शकलेन नीलनयनोपेतमजपोतं सृष्ट्वा तुभ्यं प्रायच्छत्। इन्द्राग्नियमाः मुदिताः सन्तः कुक्कुटमयूरमेषान् तुभ्यमयच्छन्।

तथान्ये देवगण मोदमानाः सुलक्षणं धनुः, तोमरं, कृपाणं, पत्रमालाविभूषितमङ्कुशं, कुठारं, शूलं, मालां, मणिं च एकैकशः प्रत्येकं तुभ्यं ददुः। द्वादशायुधानिमान् द्वादशहस्तैस्त्वं वहसि। बाल्य एव सरोजकुसुमाश्रयस्त्वं यशसा स्वर्लोकाधिपतिं देवराजमतीत्य विराजसे।

६. भगवत्प्राप्त्युपायः 71-81

त्वत्प्रसादपात्रभूता धर्ममार्गावलम्बिनो गुणशीला जीवन्मुक्ताश्च त्वच्चरणारविन्दधाम प्राप्तुं शक्नुवन्ति। क्रोधशीला घातुकाः, धर्मभ्रष्टाः, दुराचारपराः, तपोभ्रष्टाः, पुनर्जन्मसिद्धान्तविमुखाः, नास्तिकाश्च त्वच्चरणारविन्दे नैव प्राप्तुं प्रभवन्ति। रथाङ्गसतुलकदम्बकुसुममालामण्डित! सुवर्णमयं भोगं वा न कामयेऽहम्। किन्तु, दयां, प्रीतिं, धर्मबुद्धिं च त्वत्सकाशात् सदा वृणे।

## VI

# षष्ठगाथा (वैगैनदी)

गाथाकर्ता—नल्लन्दुवनार् स्वरकर्ता—मरुत्तुवन् दामोदरनार्

१. जलप्रवाहः 1-10

पयोधिपयःपानपीनोदराः पयोधराः दिवमभितो व्यापृता वर्तन्ते। निजभारापनोदनेन विश्रान्तिमभिलषन्त इव ते जलभारं

विमुञ्चन्ति। तेन भूभागः सर्वोऽपि प्रलयकालवत् पयःप्रवाह-परिवृतो दृश्यते। स च प्रवाहः पर्वतवर्तिमृगगणान् वित्रासयन्, मयूरानानन्दताण्डवे आयोजयन्, पर्वतवर्तिकषायानपनुदन्, पर्वतोर्ध्वभागादधोमुखं सवेगमागच्छति। अधोमुखमागतोऽयं जलप्रवाहः पर्वतमध्ये नानाशाखात्मना विभक्तः, निर्झरतामापन्नः सानुभागेषु पतति। सर्वशास्त्रविशारदैः सत्यमधुरवाग्भिः कविभिः कृता गाथाः यथा देशव्याप्ताः सन्तः क्रियापर्यवसायिनः सार्थकाश्च भवन्ति, तथेमे निर्झराः भूम्यां कुल्याद्वारा सवेगं केदारानाविश्य परितः प्रसृताः सस्यादीन् पोषयन्तः सार्थका विलसन्ति।

## २. महान् कोलाहलः *11-24*

वैगैनदी नवसलिलप्रवाहप्रपूर्णाऽभवत्। तत्र स्नातुकामास्तरुण्यः स्नानोपयुक्तानि अगरुकुसुमप्रसादानलादीनि वस्तूनि करे गृह्णन्त्यः, उत्सवकालधारणार्हवसनाभरणादिभिः प्रयाणोद्युक्तान् प्रियभर्तॄन् भूषयन्ति। दृश्यमेतत् श्लाघ्यतममासीत्। प्रमोद-प्रवृद्धकायानां कामिनीनामङ्गदाः स्थगिता बभूवुः। तासां बाहुवलयाः स्रस्ताः सन्तः अधोमुखाः निस्सरन्ति। कामुकयोः वक्षसि हस्तयोश्च लिखितानि पताकरेखावर्णचिह्नानि तयोरन्योन्याश्लेषात् शिथिलान्यजायन्त। मेखलाभरणानि अन्योन्यसङ्घट्टनेन

छिन्नानि तन्तुमात्रावशेषितान्यभूवन्। तैः धृताः मनोज्ञवर्तुल-प्रभासंवलितमुक्तामालाः शरीरालङ्कृतचन्दनसम्पर्कात् हीनप्रभा अभवन्। नखकपोलगता अलक्तकरसाः नायिकानायकपरस्पर-सम्मर्देन अदृश्या बभूवु। स्तनरूषितकुङ्कुमरसाः कामुकयो-रन्योन्याश्लेषेण रेखाकारतामभजन्। तद्धृतपल्लवमाला, विकीर्णाः केशाश्च चन्दनरसलेपमपमार्जयन्ति। नारीवक्षोजगतानि पुरुषवक्षो-गतानि च भूषणानि तयोः कामुकयोर्मेलनसमये स्वयमप्यन्योन्यं मिलितानि भवन्ति। अन्योन्यासक्तचित्तानां तेषां तेषां दम्पतीनां उत्साहप्रवाहः, यथा लज्जारूपमर्यादामुल्लङ्घ्य बहिः प्रयाति, तथा नदीजलप्रवाहोऽपि पर्वतकल्पं वैगैनदीसेतुं भित्त्वा बहिर्निर्याति। नदीगतास्तरङ्गाः, तथा कूलमुल्लङ्घ्य निस्सरन्ति। "सेतुबन्ध-नार्थं जनाः सज्जा भवन्तु" इति कूलपालकैराहूयमानः शब्दः, जनसम्मेलनार्थमुपयुज्यमान आह्वानपटहध्वनिः, जनानां कोला-हलध्वनिः इतीमे सर्वे निनादा एकीभूय महान्तं विप्लव-मजनयन्।

### ३. गमनप्रकारः 25-37

समरोचिताभरणविभूषिताः समराभिमुखं प्रयान्तो गजा इव वैगैनदीस्नानार्हाभरणालङ्कृताः करिण्यः पङ्क्तिशो नदीं प्रति प्रयान्ति। मञ्जुभूषणभूषितगात्रा युवानो युवत्यश्च अवगाह-

स्नानसौकर्यार्थं निजाभरणान्यपनीय स्नानोपयुक्तवसनान्यधारयन्। केचिद्गजस्कन्धमारुह्य जग्मुः। अन्ये गभीरगमनशीलवाजिनः अधिरुह्य ययुः। क्रीडासमरं कर्तुं तेषां मतिरुदभवत्। पूतशीत-नदीजलावगाहनाख्यसमरंचिकीर्षवः, तदर्थमहमहमिकया स्नान-घट्टजिघृक्षया, पुरोगमनपरायणास्ते विहरणसाधनानि सह नयन्ति। घृतविशेषपूर्णैरयोनालैः, हिमजलभरितमृगविषाणैः, रम्यसुविहितपोतैः, सुवर्णरूषितक्रीडारथैः, तथान्यैः जलक्रीडा-समरसाधनैः समेताः प्रययुः। ऋजुमार्गमतीत्य उत्साहविशेषेण यथेच्छं गच्छद्भिः बहुदूरव्यापृतगजतुरगगणैः मार्गगामिजनानां यथोपरोधो न स्यात् तथा तान् चोदयन्तस्तीराभिमुखं प्रयान्ति सर्वे जनाः।

## ४. कलुषितं सलिलम् *38-51*

नदीकूलोपान्तवर्तिग्रामवासियुवका जनसम्मर्देऽस्मिन्नित-स्ततो गन्तुमप्यशक्ता बभूवुः। जलक्रीडार्थमागतेषु तेषु दुर्बला जना अवगाहनेन विहर्तुमशक्ताः स्नानघट्टग्रहणमात्रपरायणा अभवन्। बलिनो युवकास्तु नदीमवतीर्य यथेष्टं विहरणपरायणा बभूवुः। विहरणवेलायां निजाङ्गगतवासनाद्रव्यकुसुमचन्दन-रसामोदप्रसूनघृतानां सम्बन्धेन वैगैनदी स्वयं वासनावासिता प्रावहत्। एवं सुगन्धिसलिलपूर्णप्रवाहजुष्टां वैगैनदीं दृष्ट्वा

वेदविदो विप्राः "स्त्रीपुरुषशरीरामोदद्रव्यसम्बन्धेन कलुषिता अशुद्धा चेयं नदी न स्नानपानार्हा" इति निश्चित्य दूरत एव स्थित्वा, भ्रान्ताः कलुषितचित्ताश्चाजायन्त।

आमुक्तप्रसूनानि, स्त्रीपुरुषकायधृतप्रसूनमालाः, तीर-प्ररूढकन्दमूलफलगुल्मानि च प्रवाहे मिलितानि प्रयान्ति। तद्ग्रहणेच्छया नीचजना अहमहमिकया प्रवाहमध्यमवतरन्ति। एवं कलुषितोऽयं नवनदीजलप्रवाहः कलुषितसुरेव अनुपादेयो-ऽपावनश्च वर्तत इति धिया बहवो जना नदीस्नानोपरतचित्ता आसन्।

५. मदुरायां वैगैनदीप्रवेशः *52-60*

तिरुप्परङ्गुंट्क्षेत्रम्। कदम्बकुसुममालामण्डितो भगवान् षाण्मातुरस्तत्र प्रतिवसति। अच्छस्वच्छनिर्झरनादलाल्यमाना निरर्गलनीरूपानिलप्रशस्यमानाः कामुकाः निशि स्त्रीणामुत्तुङ्ग स्तनोपरि शयाना निद्रान्ति। मदनशरताड्यमानास्तरुण्यः प्रणय-कलहेन कुसुममालाश्छित्वा वैगैनद्यां क्षिपन्ति। छिन्नकुसुम-स्रक्पूर्णा द्राविडी वैगैनदी मदुरावासिनां निशि तिरुप्परङ्गुण्ट्क्षेत्र-प्रवृत्तप्रणयकलहवृत्तान्तं छिन्नकुसुममालाच्छद्मना ज्ञापयन्ती मदुरानगरवीथीषु प्रभातवेलायां सर्वत्र प्रसृता प्राविशत्।

## ६- प्रणयकलहः                    61-86

[वैगैनदीमहिमानं, भार्यया सह नदीप्रवाहकृतविहारं च नायकः प्रियायाः कस्याश्चित् सविधे वदति। तेन तस्याः कोपः। नायककृततदनुनय इत्ययमंश उक्तिप्रत्युक्तिरूपेणाधस्तान्निरूप्यते]

प्रियनायिका– अनाहूतातिथिवत् स्वयमेव गत्वा कस्याश्चित् प्रियनायिकायाः कृते नूत्नपल्लवमपचित्य अयच्छः। न तु मह्यम्।

नायकः— तत्त्वं न जानीषे। त्वदर्थमेवापचितोऽयं पल्लवः।

प्रियनायिका— विनीतवेषधारिन्! कपटप्रेमप्रदर्शक! पूर्वं मत्कृते पल्लवमपचित्य साक्षात् मत्समीपमागतवानसि। तेन तदम्लानं नूत्नं चासीत्। अद्यानीतोऽयं म्लानो दृश्यते। नूनं नूत्नापचितपल्लवं कस्यैचित् प्रथमं दातुमगच्छः। तद्ग्रहीतुमनिच्छन्त्या तया दूरीकृतस्त्वं विलम्बेनानीतवानसि मत्समीपम्। कालविलम्बमसहमानः पल्लवो म्लानो बभूव। इतो नान्यत्कारणमस्ति म्लानतायाः। कण्ठगतमालाम्लानतामप्यनादृत्य नवपल्लवमपचित्य करगृहीतपल्लवस्त्वं तन्निकटमेत्य प्रदक्षिणप्रणामपूर्वकं तस्यै दत्वापि तदीयप्रसादं न लब्धवानसि किम्? ब्रूहि।

नायकः—रम्योऽयं नवनदीप्रवाहः। दिवसावसानबेला च सन्निहिता। वेगेन पोतमारुह्य तरणवेलायां जलसम्बन्धेन पल्लवोऽयं म्लानोऽभूत्। सर्वथा सत्यमेतत्। तिरुप्परङ्गुण्ड्क्षेत्राधीशकुमारनाम्ना शपेऽहम्।

प्रियनायिका—कामप्रवाहसदृशोऽयं जलप्रवाह इति यदुक्तं त्वया तत्सर्वात्मना साधु। अयं च कामवेगः क्वचिद्वर्धते क्वचित् क्षीयते च। वैगैनदीप्रवाहोऽपि समानयोगक्षेम एव। किं वृथा असत्यशपथकथनेन? अपि च वर्षाकाले मेघेषु वर्षत्सु नदी जलसमृद्धा भवति। अन्तिकवर्तिनमपि मदीयं गृहं पोतसाह्येनैव त्वयाऽऽगन्तव्यमापतति। निदाघकालीनशुष्कसलिलायां नद्यां जन्तव इतस्ततः सञ्चरन्त आहारार्थमटन्ति। कालभेदेन यथा क्वचित्पूर्णसलिला क्वचित् शुष्कसलिला च भवति तथा त्वदीयकामोऽपि समयभेदेन व्यक्तिभेदेन च वर्धते लीयते चेत्येतद् जानीहि। प्रवाहनीयमानप्लव इव स्वानुरक्ताभिरङ्गनाभिः स्ववशे नीयमानं तव वक्षस्स्थलं तासामवलम्बनपोतवत् प्रकाशते। एवंविधवक्षःसम्पन्न! तस्या गृहे निर्भयं रात्रिमनयः। विरहातुरायास्तस्याः खेदमपनुदन् तया सह वासमकरोः। अनन्तरक्षण एवाश्रपूर्णायास्तस्या वियोगेन पुनर्मनोवेदनां जनयसि। भिन्नकूलायास्ततो बद्धसेतुमत्या वैगैनद्या विशालरन्ध्रेभ्यो जल-

निर्गमनसमानमस्ति तवेदं कृत्यम्। तस्मात् त्वदागमनमत्र परिह्रियताम्। एहि तदन्तिकम्।

७. नायककृतशपथः *87-95*

नायकः—तटाकेऽहं स्नानं कुर्वन्नासम्। कन्यका काचित् कूलेऽवर्तत। प्रमादवशेन सा तटाके पतिता सती पुनः स्वयमवोत्थाय मुग्धा मदुपरि पपात। यदाऽहं तामुद्धर्तुमैच्छं ततः पूर्वमेव सा लब्धप्रज्ञोदतिष्ठत्। तेन तामज्ञातकामरसां बालिकामवेहि।

तामन्तराऽपरा काचित् मद्वक्षसि मालेव पतिता मामालिलिङ्ग। का वेयं नदी यस्यामिदं प्रवृत्तम्। सर्वमेतदालोच्य त्वमेव ब्रूहि ममोत्तरम्।

प्रियनायिका—श्रूयतामुत्तरम्। सम्यगालोच्य यथावद् बुध्यस्व। वैगैनद्यामेव सर्वमेतत् प्रवृत्तम्। का वास्ति प्रसक्तिरन्यस्याः नद्याः?

नायकः—तटाके खल्विदं सञ्जातम्। वैगैनद्यामिति कुतोऽन्यथोच्यते त्वया? तिरुप्परङ्कुण्ड्रक्षेत्रभूधरशिरसि हस्तं निक्षिप्य शपेऽहम् 'मदुक्तमेव सर्वथा साध्वि'ति।

## ८. वृद्धाङ्गनानामुपदेशः 96-106

[ प्रियनायिकानायकयोर्मध्ये प्रवृत्तमिदं दृश्यं दृष्ट्वा तत्रस्था वृद्धाङ्गना काचित् प्रियनायिकामेवमाह–]

"अयि भामिनि! त्वदञ्जनाश्चितनयनयोः क्रोधजनित-रक्तिमानमवेक्ष्य नायको भृशं बिभेति। तस्मात् तथाविधे कोपं परिहरन्ती विमुञ्च विप्रलम्भम्। तेन सह यथेष्टं विहरस्व। मद्वाक्यमनादृत्य विप्रलम्भजनितकोपो यद्यनुवर्तेत तर्हि कामोप-भोगस्तव नैव लभ्येत। त्वं पुनस्तरुणी। भोगाभिलाषिणी च। कुपितस्सः त्वां विहाय गच्छेत्। पुनस्तदन्वेषणार्थं गाढतिमिरा-वृतरात्रौ गन्तव्यं भवेत्। तथा गमनं त्वदीयचारित्र्यस्य कलङ्कं जनयेत्" इति।

एवमन्या वृद्धाङ्गना अपि प्रार्थनया, विशदवचनैः। रोदनेन, उपायान्तरैश्च तां सान्त्वयामासुः। ततः प्रसन्नौ भूत्वा तौ प्रियनायिकानायकौ मधुसेवनेन मुदितावभूताम्। नद्यां सानन्दं स्नानमकुरुताम्। कदाचित् विप्रयुक्तौ कदाचित् संयुक्तौ च भूत्वा संश्लेषविश्लेषाभ्यां पर्यायेण कामोपभोगमनु-भवन्तौ इतस्ततः सञ्चरन्तौ च कालमनयताम्।

नायिका—(प्रियनायिकानायकयोर्मध्ये प्रवृत्तमिदं कामोपभोगवृत्तान्तं दूतीद्वारा श्रुत्वा नायिका नितरां खिन्ना वैगैनदीमेवमाह)

हे वैगैनदि! त्वयि विहरतोः कामुकयोः निरवधिककामेच्छां जनयन्त्यास्तवायं महिमा वर्धतामभिवर्धताम्। (इत्थं वैगैनदीं स्तुतिव्याजेन विनिन्द्य स्वगृहे नायकस्य प्रवेशं वारयति नायिका)

## VII

## सप्तमगाथा (वैगैनदी)

साहित्यकर्ता—मैयोडक्कोवनार्   स्वरकर्ता—पित्तामत्तर्

१. वृष्टिः   *1-10*

[वैगैनद्यां नवसलिलप्रवाहे नायिकानायकानुष्ठितजलक्रीडासम्बन्धिविषयं श्रुत्वा नितरां तुष्टा उपमाता, "दृश्यमेतत् कथं प्रवृत्तम्? विस्तरेण श्रोतुमिच्छामि। सर्वं सामग्र्येण श्रोतुमिच्छामि" इति सखीं पृच्छति। एवं पृष्टा सा जलक्रीडायां नायिकानायकयोः अन्योन्यशृङ्गारचेष्टितमुपमात्रे निवेदयति। अयमेव प्रकृतगाथाप्रतिपादितोऽर्थः।]

वीचीवलयाकुलनीलशीतजलधिं प्रविश्य अशेषजलःपानजनितभारमसहमानाः क्रूराशनिध्वनिसमेताः पयोधराः भिन्न-

तीरतटाकादिव भग्ननिजोदरात् जलराशिममुञ्चन्। मुक्ताश्च ते जलराशयः पर्वतमस्तकपतिताः, अच्छस्वच्छनिर्झरात्मना परिणताः प्रवहान्तरैश्च मिलिता वेगैनदीमाविशन्। जयभेरीघोषघुष्टपाण्ड्य-भूपालसैन्यं शत्रुदेशजिगृहीषया निरर्गलं, सोत्साहं, सवेगं च यथा पुरोगमनशीलं भवति तथा नवनदीजलप्रवाहः सस्याभिवृद्धिमूलक-लोककल्याणकांक्षया केदारेषु वनप्रदेशेषु च निराटङ्कं प्रविष्टो-ऽभूत्। गम्यस्थलदैर्ध्यमप्यविगणय्य प्रवाहोऽयमहोरात्रं प्रव-हन्नेवावर्तत।

२. प्रवाहकृत्यानि *11-22*

नीलोद्यानप्ररूढशाद्वलस्थलीमभितो नदी प्रवहति। नाना-शाखोपशोभितरुप्रफुल्लप्रसूनगुच्छानयं सह नयति। वर्षापयः-पूर्णागम्यपर्वताग्रप्ररूढं प्रभञ्जनभग्नपादपशाखानिचयं च समूलं सह नयति। ऊर्ध्वप्रदेशवर्तिवस्तून्यधःप्रदेशमानयति। नाना-वस्तुपूर्णनवनदीसलिलप्रवाहं दृष्ट्वा कृषीवला भृशं तुष्यन्ति। सन्तोषहेतुः पटहवाद्यघोषः सर्वत्र श्रूयते। नाटयशास्त्रमर्यादा-मतिक्रम्य यथेष्टं नृत्यन्त्या विप्रलम्भश‍ृङ्गारानभिज्ञया च नाटय-गणिकया तुल्यं कुल्यादिक्षुण्णविहितमार्गमतीत्य स्वतन्त्रं प्रवहन् तीरं भित्त्वा प्रवाहः प्रयाति। विविधामोदद्रव्यनिर्मितलेपनार्ह-चन्दनरसः साधारणगन्धवान् यथा प्रकाशते, बहुसुगन्धिवस्तु-

वहनेनान्तर्गर्भितगन्धसामान्यभरितारुणनवनदीप्रवाहः तथा बहिः परं असाधारणनूत्नपरिमलविशेषं प्रकाशयन् चकास्ति।

### ३. बहुजनवाक्यम्   *23-39*

नवनीरप्रवाहप्रवेशात् तटाकोत्फुल्लरक्तोत्पलकुसुमानि मग्नान्यभवन्निति केचिज्जना वदन्ति। वालुकासु निजनिर्मित-वैहारिकप्रतिमाः प्रवाहेण नीता इति तरुण्यो रुदन्ति। केदारोत्पन्न-धान्यमञ्जरीः खलराशीभूतधान्यराशींश्च प्रवाहोऽयमनाशयदि-तीमां वार्तां ग्रामवासिजनानां पटहध्वनिपुरस्सरं निवेदयामासुः। ग्रामोऽयं पयोधिपरिवृतोऽभूदित्यन्ये केचिदवोचन्। नूनं मेघा भग्नोदरा बभूबुः, नोचेत् कथमेवं कुम्भवर्षः पतेदिति कैश्चिदवोचि। गायकावासगृहाणि, नर्तकावासवीथयः, केदाराश्च प्रवाहपयः-पूर्णाः प्राकाशन्तेति बहवो बहुधाऽवोचन्। नारिकेलपादपाग्रमभि-व्याप्य प्रवाहोऽयं प्रावहत्। तेन केदारवर्तिमीना नारिकेलाग्र-भागमागताः पादपबालपर्णानि भक्षयामासुरिति वदतां केषा-ञ्चिद् वचः श्रूयते। प्रवाहानीतमृत्तिकाप्रवेशेन निम्नभूमिवर्ति-बालसस्यालवालानि मृत्तिकापूरितान्यभवन्निति भूस्वामिनः खिन्न-मना अभवन्। विप्रलम्भकुपितनायिकां रन्तुमिच्छतो नाय-कस्य कामप्रवाह इव नदीप्रवाहोऽयं सवेगमगमत्। पीवरोच्छून-

मीनकल्पोदरसमेताः कृषीवलाः कृषिकर्मनिर्वहणलम्पटाः सबान्धवाः प्रवाहाभिमुखमाजग्मुः ।

## ४. प्रवाहदृश्यम् 40-50

शैलकल्पकूलद्वयोपेता सिततुहिनाद्रिकल्पफेनमण्डिता प्रसूनसवर्णा वैगैनदी, उपवनमभितः प्रावहत् । प्रवाहानीतकिसलयाः स्नानमाचरन्तीनां मालालङ्कृतकण्ठीनां तरुणीनां कर्णभागमागत्य कर्णाभरणशोभामजनयन् । नदीमवतीर्य विहरतां युवकानां शिरोधृतमाला अपहरन् प्रयात्ययं वेगागतनदीजलप्रवाहः । स्नानमाचरन्तीनां नारीणां देहालङ्कृतवलयाङ्गुलीयकशिरोभूषणदुकूलमेखलाद्याभरणानि, तथा पुरुषदेहालङ्कर्तृवस्त्राङ्गुलीयकबाहुवलयादीनि च वेगागतप्रवाहेणापहृतान्यभूवन् । वैगैनद्याः कृत्यमिदं, ससैन्यं शत्रुदेशं प्रविश्य सर्वोत्तमवस्तून्यपहृत्य प्रत्यागच्छतः पाण्ड्यराजस्य कृत्यं अनुकुर्वदिवासीत् ।

## ५. स्त्रीणां जलक्रीडा 51-60

कमनीयगुणालङ्कृतपाण्ड्यभूपालपाल्यमानायां वैगैनद्यामङ्गनाः स्नानमाचरन्ति । तासु काश्चन जलसेचकभस्त्रायन्त्रद्वारा अङ्गनानां मुखानि सलिलैः सिञ्चन्ति । सलिलसिक्तमुखीनां तासां कुसुमायतनयनानि निश्चेष्टान्यभवन् । जलक्रीडायां पराजिता

काचित् पराजयसूचकतया स्वीयवदनं निजहस्तेनाच्छादयति। पराजयमेतद् दृष्टवती अन्या काचित् सदर्पं कण्ठगतस्वर्णरज्ज्वा पराजिताया भुजयोर्बबन्ध। स्वर्णलतासमानगात्रा अपरा काचित् तस्याः स्वर्णरज्जुबन्धनं द्रष्टुमसहमानेव तां बन्धान्मोचयितुमयतत। यतमानाया असिभिन्नाम्रशलाटुसवर्णाञ्जनाञ्चितनयनायास्तस्या नीलाक्षिसम्बन्धेन नवारुणप्रवाहसलिलं स्वयमपि नीलिमानमभजत। वैगैप्रवाहसौन्दर्यमित्थमनुपममद्वितीयमवर्णनीयं चाशोभत।

## ६. प्रणयकलहः    *61-75*

चारुभूषणभूषितशरीरगतशैत्यापनोदनेच्छया नायिका भ्रमरनादनादितं मदकरं मद्यं पातुं हस्तेन जग्राह। नीलोत्पलनयनायाः सुरां पिबन्त्यास्तस्या नीलनयने 'नरव' प्रसूनवदरुणे अभूताम्। अरुणायताक्ष्या नायिकायाः नेत्रशोभां दृष्टिविलासं च प्रशस्य नायको बहुधा गातुमारेभे। वस्तुतो नायिकाविषयकगानमेतत् स्वपरमिति भ्रान्त्या जानती काचित् नायके मोहं बबन्ध। विपरीतसम्भवेनानेन कुपिताया नायिकायाः सकाशात् महाननर्थो भवितेति भीतभीतो विपुलायतवक्षाः स नायको नायिकान्तिकमेत्य वेपमानगात्रस्तस्थौ। स्वभावत एव रक्ते तस्या नयने वियोगहेतुना नितरां रक्ततमे अभूताम्। नदीस्नानोद्युक्तासु तासु विपरीतमत्या स्वनायकानुरक्तायां तस्यां बद्ध-

कोपा नायिका मालामाच्छिद्य चिक्षेप। कोपपरवशायाः स्नानोद्युक्ताया नायिकायाः सर्वाङ्गीणं प्रकृतिसौन्दर्यं पश्यन् नायकः कामपरवशः सन् चन्दनरसरूषितेन देहेन तस्यै साष्टाङ्गप्रणाममकरोत्। तेनाप्यशान्तकोपा सा नायिका नायकस्योत्तमाङ्गं पादतलेनाताडयत्। जलक्रीडोत्सव इत्थं मनोहरः प्रववृते।

### ७. नद्याः प्रार्थनम् 76-86

'तिरुमरुदमुर्‍ह्रै' अभिधः कश्चित् मदुरानगरनिकटवर्तिनदीस्नानघट्टः। तत्रानततन्त्रीभिस्तालबद्धसप्तस्वरान् जनयन्त्या वीणाया नाद एकत्र श्रूयते। अपरत्र तदनुगुणो गीतध्वनिः। गीतानुसृतो वेणुनादः। वेणुनादानुरूपं मृदङ्गवादनम्। भूपालनियन्त्रिता नृत्याङ्गना गायकैः परिवृता नृत्यन्ति। कूलसङ्घट्टनोद्भूतनवजलप्रवाहध्वनिना मिश्रितोऽयं नृत्यनादः अशनिध्वनिमिलितजलधरनादमनुकुर्वन्निव बभौ। एवं नृत्यगीतप्रवाहनादनादिते हे वैगैनदि! सामोदं त्वामवगाहन्तो जना देहालङ्कृतकुसुममालां त्वयि निक्षिप्य प्रयान्ति। तेन त्वमपि मालालङ्कृतेव विभासि। अवगाहनजनितसुखं यदद्यास्माभिरनुभूयते त्वत्प्रसादेन तत् शाश्वतमवाप्य हृष्टा भविष्यामो वयम्।

VIII

# अष्टमगाथा (षण्मुखः)

साहित्यकर्ता—नल्लन्दुवनार्   स्वरकर्ता—मरुनत्तुवन् नल्लच्चुतनार्

### १. हिमाद्रिसाम्यम्   1-21

हे सकलप्राणनायक! फुल्लतुलसीमालया अमोघसम्पदा वैनतेयचिह्नितपताकया च विशिष्टः श्रीमन्नारायणः, वृषभाधिरूढः परमेश्वरः, कमलासनो ब्रह्मा, ब्रह्मसुतास्तिमिरापनोदनक्षमा द्वादशादित्याः, देवभिषजावश्विनीदेवौ, वेदविशारदा अष्ट वसवः, एकादश रुद्राः, अष्टदिक्पालाः, देवाः, दानवाः, तथान्ये वेदविदस्तपश्शीला देवर्षयः, इत्थं इमे सर्वेऽपि त्वद्दर्शनकाङ्क्षया यतो भुवमागत्य तिरुप्परङ्गुण्ड्क्षेत्रे मिलिता बभूवुः, तत इदं क्षेत्रं त्वन्नित्यनिवासहिमाद्रिसाम्यमावहति।

तुहिनाद्रावद्वितीयं दिव्यसलिलपूर्णमेकं सरः। तत्र नानादलयुतं सरोजकुसुमम्। परितो विद्युच्छोभावहाः कुसुमगुच्छाः। तन्मध्ये त्वमवातरः। इदं तिरुप्परङ्गुण्ड्क्षेत्रभूधरशिखरनिस्सरन्निर्झरपयःपूर्णं सरः, त्वदवतारनिदानसरसा तुल्यं चकास्ति। एतादृशे हिमाद्रौ त्वद्वाहनपिणिमुखवारणगर्जितानुकारीणि जलदगर्जितानि सर्वत्र श्रूयन्ते। तच्छ्रुतवान् त्वत्पताकवर्ती कुक्कुटो

भूधरं कम्पयन्निव कूजति। कुक्कुटकूजितश्रवणसञ्जातकुतूहलः त्वद्वाहनमद्वारणः पर्यायेण शब्दापयति तिरुप्परङ्गुण्ड्रक्षेत्राख्यभूधरगुहासु प्रविष्टा एते निनादाः ततः प्रतिध्वनिमुत्पादयन्ति।

### २. मदुरानगरशोभा 22-35

प्रभो! त्वत्क्षेत्रमदुरानगरयोर्मध्यवर्तिनि मार्गे वर्णसाम्यमापन्नान् सजातीयानन्वेषयन्तो भ्रमरा मधुरं गायन्ति। गानमेतत् सप्तस्वरवतः पञ्चस्वरवत्याश्च वेणोर्वीणायाश्च गानं ज्ञापयदिवावर्तिष्ट। जलाशयगतप्रसूनानि विकसन्ति। चम्पकपादपाः दीर्घकुसमगुच्छभरिता विलसन्ति। मल्लिकाप्रसूनानि फुल्लानि प्रकाशन्ते। फुल्लसुगन्धि 'कान्तन्' कुसुमानि समन्तान्निजसौगन्ध्यं प्रसारयन्ति। एवमन्यानि च मकरन्दनिष्यन्दिकुसुमानि सुवासनामुद्गिरन्ति। नानाकुसुमामोदमावहन् दक्षिणपवनो मन्दं मन्दं वाति। पवननिरोधिक्रौञ्चाद्रिभञ्जकशूलमण्डितपाणे! पयोधिनिनादेन वयोधिपयःपानोन्मत्तपयोधरध्वनिना इन्द्रायुधभृद्विद्युच्छब्देन च तुल्यो मङ्गलमणिमयभेरीध्वनिः मदुरानगरे सदा श्रूयते। अस्माच्च ध्वनेरुत्थितः प्रतिध्वनिरनन्तरक्षण एव पर्यायेण तिरुप्परङ्गुण्ड्रक्षेत्रमाविश्य पर्वतमापूरयति।

### ३. भ्रमरसन्देशः 36-46

नायकेभ्यः सन्देशप्रेषणाय नायिकाः भ्रमरान् दूतकर्मणि नियोजयामासुः। ते च उच्चैः शब्दायन्तः मदुरापुरीं प्राविशन्।

रम्यप्राकारावृतपुरातनमदुरानगररथ्यासु भ्रमन्तो भ्रमराः समेषां पुरतः शब्दायन्त इतस्ततो बभ्रमुः। तेषामागमनरहस्यं ज्ञातवन्तो नायकाः नायिकाभिस्सह सङ्गता बभूवुः। तदानीमेव वेश्यागृहात् प्रतिनिवृत्तः कश्चिन्नायको निजनायिकां दृष्ट्वैवमाह- "प्रिये! भिन्नाम्रशलाटुकाखण्डसाकारे नेत्रे। पल्लवसदृशी देहकान्तिः। रम्योन्नतकीचकसाकारौ स्कन्धौ। क्षुद्रवलयवेष्टितौ करौ। एवम्भूता भामिन्यो भूधरोपान्तकुसुमवाटिकासु कामुकैस्सह गान्धर्वशृङ्गारमनुभवन्ति। अथान्याः कुलस्त्रियः पतिवक्षस्स्थलं गाढमालिङ्ग्य भोगमनुभवन्ति। इत्थमङ्गनानां द्विविधभोगानुभवहेतुभूतमिदमतिशीतलं तिरुप्परङ्गुण्ड्क्षेत्रम्।

४. नायिकानायकचेटीनामन्योन्यभाषणम् *47-89*

नायिका—(कुपिता सती) परस्त्रीसङ्गमे तच्छरीरगतामोदस्य त्वत्कायसङ्क्रमणात् सुवासनावासितस्त्वं विराजसे। अहरहः प्रातर्गत्वा सायं गृहं प्रत्यागच्छसि। अवशिष्टसमये सुशीतलकुसुमनेत्राभिः परस्त्रीभिस्सह विहरसि। फुल्लकुसुमशोभिदिवसावसानवेलायां नियमेनात्रागच्छसि। "त्वां वियुज्य न जीवेयम्" इति इत उपरि वृथा शपथं मा कुरु।

नायकः—हे कमलायतनयने! वालुकोपशोभिवैगैनदीप्रान्तोद्यानवननाम्ना शपे। तिरुप्परङ्गुण्ड्भूधरसानुनाम्ना च

शपे। भूसुरनाम्ना च शपे। त्वदुक्तं सर्वदाऽसत्यम्। अन्यथा-ग्रहणमूलां चिन्तां त्यज। मदङ्गसङ्गिसौगन्ध्यं न तावत्पराङ्गना-सङ्गममूलकम्। अपि तु फलप्रसूनस्पर्शिपवनसंस्पर्शात् मच्छरीरं सौरभभरितं विभाति। मुञ्च कोपम्।

नायिका—अलं मृषाभाषणेन। विमुञ्च मिथ्याप्रतिज्ञाम्।

चेटी—अरे सत्कुलोचितगुणविहीन! मदीयं वचनं आमूलाग्रं श्रुत्वा ततः शपथकरणे प्रवर्तस्व। तव प्रियनायिकेयं मातुरेकैकपुत्री। अञ्जनाञ्चितनयना चारुभूषणभूषिता च। मातु-र्निरवधिकप्रीतिपात्रभूताया एकैकपुत्र्या अस्याः का वान्या गति-रस्ति यदि त्वमस्यामौदासीन्यमावहेः।

नायकः—हे चेटि! प्रवाहभरितवेगैनदीवालुकां स्पृष्ट्वा शपे। षडाननावासभूतरम्यशीतलतिरुप्परङ्गुण्ड्रमहीधरपादमुप-स्पृश्य शपथं करोमि; मदुक्तिः सर्वथा तात्त्विकीति।

चेटी—अरे! अस्मत्प्रियबन्धुकल्पे नदीसैकते त्वदीय-प्रीतिरप्यतात्त्विकी। तथा सप्तलोकपालकषडाननाधिष्ठानतिरुप्प-रङ्गुण्ड्रमहीधरेऽपि त्वदीया प्रीतिर्न तात्त्विकीति मन्ये। तात्त्विकी चेत् मैवमसत्यप्रतिज्ञां कुर्याः। मृषावचनैः मां तोषयितुकामस्त्वं दयार्द्रहृदयस्य कार्तिकेयस्य नाम्ना शपथं करोषि। एवमसत्य-

प्रतिज्ञं त्वां तदीयः सत्यशूलायुधो हन्यात्। भगवन्नामोच्चारण-पूर्वकं प्रतिज्ञां कुर्वन्तं त्वां विप्राः कदाचित् सहेयुरपि। षण्मुख-वाहनमयूरः, तद्धस्तगतशूलायुधः, तत्प्रियनायिका वल्लीदेवी च त्वयि नैव दयां प्रदर्शयेयुः, यदि त्वं तेषां नाम्ना प्रतिज्ञां कुर्याः। सज्जनसेव्यसाधुमहीधरं वैगैनदीवालुकां च स्पृष्ट्वा असत्यशपथ-करणाद्विरमस्व।

नायकः—अयि चेटि! शरीरेण भिन्नावपि प्राणेना-भिन्नावावां स्व। एवं सति कस्य वियोगः? केन संयोगः, प्रष्टा कः, वक्ता कः? संयोगवियोगप्रश्नोत्तरादीनां आवयोर्मध्ये का वा प्रसक्तिरस्ति? विपरीतमत्या असत्यप्रतिज्ञोऽहमिति वृथा मयि मृषादोषमारोपयसि।

तदीये नयने तटाकोद्भूतकुवलयसमाने फुल्लपरिमल 'नरव' प्रसूनतुल्ये अञ्जनाञ्चिते च लसतः। शोभायमानं फाल-तलम्। मल्लिकाप्रसूनशोभावन्तो मुक्ताफलसदृशाः श्वेतदन्ताः। एतादृशसुन्दरनायिकया मयि दोषारोपणं यत्क्रियते तन्न सत्यम्। नापि स्वप्नायितम्। असत्यप्रतिज्ञं मां षण्मुखो दण्डयेदिति मां भापयसि। त्वन्नायिका तेन बाध्येत। तत्परिहारार्थं भग-वत्कार्तिकेयचरणयोः भजनपूर्वकं आवयोः कृते अन्विष्यताम-मङ्गलनिवृत्त्युपायः।

हे सख्यः! सर्वे वयं मिलिताः सन्तो तिरुप्परङ्गुण्ड्क्षेत्रमेत्य कुसुमैस्तमर्चयेम। बलिहवींषि तस्मै समर्पयेम। सतालं गानं कुर्मः। पटहान् वादयेम। तेन प्रसन्नः सोऽस्मान् पालयेत्।

चेटी—मदीयपापपरिहारार्थं, "भगवत्सन्निधिः गम्यतां त्वया" इति किल त्वमवोचः। असत्यप्रतिज्ञामूलकपापात् बिभेषि त्वमित्येतद्वचनेनैव सम्यगवगम्यते। महिषवाहनान्तकाज्ञामपि अन्यथाकर्तुं शक्तः षडाननः। तन्निग्रहपात्रीकृतं त्वां रक्षितुकामा वलयवेष्टि करा नायिका भगवदन्तिकमेत्य तत्पुरोलम्बमानां घण्टां निजहस्तेन ताडयन्ती शिरसा प्रणम्य त्वत्क्षेमार्थं याचितुमगमत्। दृश्यमेतत् त्वमेव तत्र गत्वा साक्षात्कुरु। दासीदर्शनार्थं पूर्वं बहुवारं गतत्वात् परिचितप्रायः किल ते स पन्थाः।

### ५. भक्तजनयात्रा *90-102*

पवनपूर्णोन्नतनानाशिखरशोभिते तिरुप्परङ्गुण्ड्भूधरे महान् वृष्टिपातः। नीरपूर्णाः कुसुमवाटिकाः सुशीतलशाखोपगूढफुल्लप्रसूनभारभरिताश्च दृश्यन्ते। तटाकास्तोयपूर्णाः दृश्यन्ते। प्रवाहानीतवालुकाः तत्र तत्र शून्यस्थलेषु एकीभूय निबिडोन्नता विलसन्ति। एतादृशतिरुप्परङ्गुण्ड्क्षेत्रमदुरानगरमध्यवर्तिमार्गेषु भक्तजनाः भगवदुत्सवदर्शनकाङ्क्षया प्रयान्ति। विविधपरि-

मलवर्णपूर्णाश्चन्दनरसाः। श्लाघ्या अगरुधूपाः। वायुसञ्चारेऽप्य-शाम्या दीपाः। सुगन्धि कुसुमानि। गीतोत्पादनार्हा वाद्यविशेषाः। मणयः। तन्तुविशेषाः, मयूराः, कुठाराः, पिणिमुखाभिधवारणाः, तथान्यानि च भगवत्प्रीतिकराणि पूजासाधनानि वहन्त इमे भक्तजना अभक्तजनालभ्यं महीधरमेनं प्राप्य भगवन्तमस्तुवन्।

## ६. स्त्रीणां प्रार्थनाप्रकाराः *103 111*

कामुकहस्तावलम्बनपूर्वकं वैगैनद्यां स्नानकरणवद् यदस्माभिः स्वप्ने दृष्टं तज्जीवितेऽपि सफलं भवत्विति काश्चन स्त्रियो भगवन्तं प्रार्थयन्ते। पुत्रभाग्यहीनाहं यदि गर्भिणी स्यां तर्हि तवेदं वस्तु प्रतिफलतया दद्यामिति भगवति वरं याचन्ते अन्याः। धनार्जनेच्छया प्रोषितो मम पतिः पूर्णकामः प्रत्यागच्छत्विति भगवच्छ्रोत्रयोः श्रावयित्वाऽपरा अङ्गनाः नमन्ति। समरभूमिगतो मम नायको विजयी भवत्विति कथयन्त्यः काश्चन तमर्चयन्ति। तालानुगुणं गायतां जनानां निनाद एकत्र। तालबद्धं नृत्यन्तीनां नर्तकीनां ध्वनिरपरत्र। पयोधरावृतपर्वतप्रान्तेषु एषां शब्दानां प्रतिध्वनिः। सर्वेऽपीमे निनादाः सम्मिलिताः सन्तो महान्तं कोलाहलमुदपादयन्।

### ७. जलक्रीडा 112-119

आदौ जलाशयमाविष्टाः, ततः पुनःपुनर्बहिरागमनप्रयत्नविशेषैः क्रीडन्ति ताः स्त्रियः। तासामञ्जनालङ्कृतनयनानि जलक्रीडया रक्तिमानमासाद्य सरोजतुल्यानि विलसन्ति। मुखान्यपि सरसीरुहसमानि समिन्धन्ते। पादाश्च पङ्कजप्रभोपेताः। स्कन्धरूपतटाकाविर्भूतपङ्कजा इव सन्ति तासां हस्ताः। नलिनकुट्मलाकाराः स्तनाः। कुमुदायितानि रक्तवदनानि। किं बहुना। तासां सर्वेऽप्यवयवाः सरोजसाम्यमावहन्ति। तदङ्गावयवपद्मानां तटाकोत्फुल्लाच्चिक्कपद्मानां चाकारेण भेदो नैव ज्ञातुं शक्यते। निशितदन्तयुता नायिकाः, तथानङ्गसुन्दरा नायकाश्च जलाशयमाविश्य यदा क्रीडन्ति तदा नायिकानायकवक्षोगतान्याभरणान्यपि अन्योन्यसङ्घर्षणेन मुग्धान्यभूवन्।

### ८. जलसमृद्धिः 120-130

नारीकरार्पितकामरसं, तथा पाचकजनसज्जीकृतपीयूषोपममन्नं च भुक्त्वा, रक्तपल्लवसवर्णदेहास्ता वध्वः कामुकजनविहारसञ्जातखेदं दूरीचक्रुः। "हे तिरुप्परङ्गुण्ड्रमहीधर! एवं कामुकाः कामिन्यश्च अन्योन्याश्लेषसुखमनुभवन्तः प्रार्थनार्थमागताः, इतीमे सर्वेऽपि उमामहेश्वरयोः पुत्रत्वेन जनित्वा कदम्बपादपकल्पितसन्निधानस्य कार्तिकेयस्य देवालयं प्राप्य समा-

राधयन्ति। भूलोकवासिजनानामनावृष्टिमूलके खेदे जातेऽपि, त्वं परं निरर्गलनिस्सरन्निर्झरैः नीरसमृद्धिसम्पन्नो भव।

## IX

# नवमगाथा (षण्मुखः)

गाथाकर्ता—कुण्ड्रंपूदनार्                स्वरकर्ता—नल्लच्चुतनार्

१. देवयान्या अश्रुपातः                1-11

शतमखपाल्यमानो मेघावृतो देववरेण्याधिष्टितो दुरारोहो महानुन्नतश्च हिमालयो नाम नगः कश्चित् विपुलामिमां भुवं लब्धप्रतिष्ठां कुर्वन् उत्तरस्यां दिशि वर्तते। ततः, अनलसवर्णः पद्मोद्भवश्चतुर्मुखो महाकाशगङ्गां व्यमुञ्चत्। विसृष्टां च तां निबिडनिजजटाभारेण पतितफुल्लकुसुमराशिमिव परमशिवो लीलया दधार। तेन जलधारीति नाम स लेभे। एवंविधस्य नीलकण्ठस्य परमशिवस्य सप्तर्षीणामनुमत्या कृत्तिकास्वष्टासु पुत्रत्वेन त्वमवातरः। अञ्जनरूषितपक्ष्मनयनां वल्लीदेवीं गान्धर्वेण विधिना ऊढवत स्तवेदं कृत्यं द्रष्टुमसहमानेव सहस्राक्षतनया अञ्जननेत्री त्वद्देवी देवयानी अश्रूण्यमुञ्चत्। वर्षाकालवत् निदाघकालेऽपि तिरुप्पर

ङ्गुण्ड्क्षेत्रपयोधरविमुक्तजलपातमनुकुर्वदिवावर्तिष्ट अस्या अश्रुवि-मोचनदृश्यम् ।

२. गान्धर्वब्राह्मशृङ्गारयोस्तारतम्यम् 12-26

चतुर्वेदाध्ययनतत्प्रचारचतुराः ! हे वेदविशारदाः ! श्रूयतामिदं मयोच्यमानम्। शृङ्गारेषु गान्धर्वविवाहविषयशृङ्गार एव श्रेष्ठतमः। प्रेम्णा विधिवशात् स्वतस्सङ्गतयोः कामुकयोः सम्भोग एव पूर्वोक्तशृङ्गारशब्देनाभिधीयते। गान्धर्वब्राह्मविवाह-मूलकशृङ्गारयोर्मध्ये विप्रलम्भप्राधान्येन ब्राह्मविवाहमूलकशृङ्गार एवातिरिच्यते। दासीगृहपरायणस्य नायकस्य नायिकासविधे प्रणिपातप्रार्थनादिकर्मणा शृङ्गारोऽयं विशेषतो वर्धते। नाय-कस्य नूतनवेश्यागृहे वासः, तज्ज्ञातवत्या नायिकय। सुभूषितया दूतीप्रेषणपूर्वकं नायकाय स्वस्य ऋतुमतीत्वनिवेदनं, तज्ज्ञातवतोत्र नायकस्य नायिकान्तिकागमनं, तयासह भोगानुभव इतीमे विषया प्राधान्यमावहन्ति। इदं च सुरतसुखं गान्धर्वविवाहजन्य-सुखमिव न स्वाभाविकं, अपि तु विप्रलम्भमूलकम्। ब्राह्मविवाह इव विप्रलम्भमूलक गान्धर्वसुरतसुखमजानन्त्यः स्त्रियः पतिवियोग-दुःख नैव जानन्ति।

## ३. वल्लीदेवयान्योः कलहः 27-44

भिन्नकूलप्ररूढचन्दनपादपान् प्रवाहेनोत्पाटय वैगैनदी सह नयति। तथाविधप्रवाहनीयमानचन्दनागरुधूपेन, कुसुम-मालया, मुक्तास्रजाचालङ्कृतवक्षाः कार्तिकेयो वल्लीदेवीसकाशात् देवयानीनिकटमागच्छति। देवयानी च तं प्रणम्य, "त्वद्विरहावाप्तवैवर्ण्यमलीमसकायानां त्वत्स्वभावमज्ञात्वैव त्वयि बद्धभावानां नारीणां स्थितिः, वृष्टिमुपजीव्य वर्तमानस्य केदारस्य स्थितिं विडम्बयतीव। त्वय्यावेशितचित्तानां नारीणां विषयेऽपि त्व नैव दयां दर्शयसि हे वञ्चक! त्वयि दोषकथनेन किं प्रयोजनम्? अज्ञातत्वदाशयाः त्वयि बद्धभावाः स्त्रिय एव निन्दार्हा। त्वदीयालिङ्गनसुखं मम कथं भविष्यती"ति तमुक्त्वा वल्लीदेव्यासक्तमानसं तं सक्रोधमालक्ष्य कुपिता सती ततो निर्जगाम। कुपितां तामनुसृत्य निजकण्ठमालापतनपुरस्सरं तस्याः पादयोः स्वयं पतित्वा षण्मुखः सान्त्वयामास। तेन प्रसन्ना देवयानी "मा शुचः' इत्याभाष्य तमालिलिङ्ग मञ्जुभूषण-भूषिता वल्लीदेवी एतदालिङ्गनदृश्यं द्रष्टुमसहमाना षण्मुखस्य करौ बद्ध्वा मालारूपेण दण्डेण तमताडयत्। वल्लीदेवयान्योर्मध्ये प्रवृत्तमिमं कलहं पश्यन्तो देवीपक्षद्वयवर्तिमयूरा अन्योन्यं युयुधिरे। तथोभयपक्षवर्तिशुकाः निजाव्यक्तभाषितैरन्योन्य-

मनिन्दन्। षण्मुखक्षेत्रवर्तिवल्लीपक्षानुयायिनो भ्रमरा देवयानीवेणीलसद्भ्रमरैः साकं सङ्घट्टिता बभूवुः।

४. वल्लीदेवयानीसखीनामन्योन्यकलहः 45-66

वायुस्पर्शमात्रेणैव नम्रभावमापद्यमानातिसूक्ष्ममध्या देवयानीसख्यः स्वशरीरधृतमालाः प्रतिपक्षसखीदेहगतमालाभिः सह बध्वा आकर्षन्ति। तथा शिरोऽलङ्कृतप्रसूनमालाभिः प्रतिपक्षसखीस्ताडयन्ति। प्रसूनकन्दुकान् सायकस्थाने कृत्वा वल्लीसखीमध्यं प्रक्षिपन्ति। वक्षोजाभरणकञ्चुकरूपकशया वल्लीसखीः घ्नन्ति। दृश्यमेतदालक्ष्य मयूरसवर्णा अङ्कुशाभिघातव्रणकिणाङ्कितमदजलसिक्तमस्तकोपेतमत्तमातङ्गसदृश्यो वल्लीदेवीसख्यः, त्वरितगमनशीलविजयसाधकतुरगगतिमनुरुन्धाना आजग्मुः। प्रग्रहान् हस्तैरगृह्णन् सायकान् वक्षःपर्यन्तमाकृष्य वेगेन धनुर्बद्धानमुञ्चन्। चक्रायुधवत् निजाङ्गदान् विधाय तान् भ्रामयन्ति। समरेऽस्मिन् पराजिता अञ्जनाञ्चितकुमुदनयना मञ्जुभाषिण्यो देवयानीसख्यो भीताः सत्यः, विजयश्रियालङ्कृताचलकल्पवक्षस्समेतं षडाननमभितः परिवृताः सुगन्धिसलिलपूर्णह्रदमाविश्य तिरोहिता बभूवुः। मधुपानोन्मत्तभ्रमरवेषमापन्नास्ताः वीणानादसममगायन्त। चारुचूडोपशोभिमयूरवेषं धृत्वा पिञ्छान् प्रसार्य

काश्चन ननर्तुः। अपराः कोकिलवेषधारिण्यो मधुरमकूजन्। इत्थं पराजयमूलकं खेदं बहुधाऽन्वभवन्।

### ५. वल्लीदेवीविजयः 67-78

कुरिञ्चिस्थलपालकवीरव्याधकुलसम्भूता वल्लीसख्यो यतोऽत्र समरे विजयमवापुः, तेनेदं तिरुप्परङ्गुण्ड्रक्षेत्रं जयशूलपाणेः कार्तिकेयस्य प्रियावासस्थलमभवत्। चूतपादपरूपिणं वीरशूरपद्मं शूलेन समूलमुत्पाट्य त्वं विजयं प्राप्तवानसि। हे जयशूलपाणे! षडानन! तिरुप्परङ्गुण्ड्रक्षेत्रे नृत्यशास्त्रविशारदाः नर्तकानन्यान्, गानशास्त्रविशारदाः गायकानन्यान् वादे जित्वा जयिनः शोभन्ते। द्यूतकारा अपरान् द्यूतकारान् जयन्ति। एवं तत्तत्कलाकुशलाः तथान्यकलाकुशलान् विजित्य विशेषेण शोभन्ते। तिरुप्परङ्गुण्ड्रक्षेत्रे नवपयःपूर्णतटाकतुल्यह्रदस्यान्तिके विजयसूचिका पताकाऽद्यापि लम्बमाना दरीदृश्यते।

### ६. प्रार्थनम् 79-85

हे शूलपाणे! विजयोन्नतकुक्कुटपताकोपेत! भक्तिप्रेमरूपाभ्यामाभ्यां नायिकाभ्यामुपेत! अहरहः क्रियमाणेयमस्मत्सेवा अविच्छिन्ना निरर्गला फलप्रदा च भूयादिति त्वच्चरणारविन्दयोः साष्टाङ्गप्रणामपूर्वकं प्रार्थयामहे। अनुगृह्णीष्व नः।

X

# दशमगाथा (वैगैनदी)

गाथाकर्ता—करुम्पिल्लैबूनार् स्वरकर्ता—नल्लच्चुतनार्

## १. नवजलागमः 1-8

[प्रावृषि प्रतिनिवर्तयिष्य 'इति प्रतिज्ञाय प्रोषितो नायकः समयें नैव प्रत्यावर्तत। वर्षाकालः परं समाययौ। वैगैनदी सलिलभरिता बभौ। युवकानां युवतीनां च विहारस्थली बभौ सा। नायकस्यानागमनेन नायिका व्यथितमानासाऽभवत्। नायिकायाः प्रियचिकीर्षया नायकसविधे दूतं कश्चित् प्रेषयति प्रियचेटिका। दूतद्वारा सर्वमुदन्तं नायको वेत्ति। कथायामस्यां नायकसविधे दूतोक्तविषय एव कविना प्रतिपाद्यते।]

सायङ्कालवेलायां पर्वताग्रे महान् वर्षः पतति। प्रातःकाले वर्षाजलं भूधराग्रात् वेगेनावतीर्य नदीं प्रविशति। नदीप्रविष्टं पयः केदारानाविश्य जनानां बुभुक्षादिक्लेशानपोहति। फुल्लप्रसूनराशिभिरावृत तद्वारि निदाघशुष्कवालुकाप्रदेशमापूरयत् प्रवहति। स च प्रवाहः, मधुकररवाकुलचूतपादपप्ररूढपल्लवान्

कदलीपत्राणि च साकमादाय महतान्यघोषेण सह निस्सीमान पयोधरं प्रविश्य लीयते। प्रवाहनिरोधकर्मनियुक्ततीरपालकाना-माह्वानार्थं जनैस्ताड्यमानानां पटहानामाघोषस्तत्र घुष्यते।

२. जनानां गमनप्रकारः *9-26*

नवनदीसलिलावगाहनोत्सुकजनाः मेखलाद्याभरणानि दधानाः, रुधिररक्तपयःपूर्णक्रीडासाधनकीचकखण्डान्, मुक्ताफलनिभसुगन्धिजलमिश्रितचन्दनपेटिकाश्च गृह्णन्तः प्रतस्थिरे। दुरारोहाः सटापटलमण्डितास्त्वरितगमनाश्च वाजिनः। रम्यसुखासनवत्यः, शीघ्रगमनशीलाः करिण्य। नानानामोपेतवृषभसंयोजिताः शकटाः गर्दभाः, तुरगशकटाः, रम्यदण्डालङ्कृतशिबिकाः, वाहनानीमानि सम्यगलङ्कृत्य जनास्तान्यारुरुहुः।

कोरकावस्थामापन्ना अजातरजस्का बालिकाः। फुल्लकुसुमदशापन्नाः जातरजस्कास्तरुण्यः। अर्धपलितकेशा नार्यः। पूर्णपलितकुन्तला वृद्धाङ्गनाः। पतिव्रताः, वाराङ्गनाः, तासां सख्यः, बाल्ययौवनवार्धकदशामापन्ना अन्याश्चेतीमाः। नाट्यशास्त्रविशारदाः तालविध्युपरोधेनोपनिबद्धनानास्वरान् यथोत्पादयन्ति तथा निजपादन्यासैः नानाध्वनिमनुकुर्वन्त्यस्ताः नदीतीरमाजग्मुः।

## ३. सलिलक्रीडा 27-40

तासु काश्चन नदीप्रवाहसौन्दर्यं पश्यन्त्यः, अचञ्चलास्तिष्ठन्ति। अपरा नावमास्थाय प्रयान्ति। अन्याः समरोद्यतानां युवकानामग्रे पङ्क्तिशस्तिष्ठन्ति। जलक्रीडासमरे काश्चन लग्नमानसा लसन्ति। तुरगवाहना नदीमवतरन्ति काश्चन। वारणस्कन्धमारूढाः सलिलेषु तान् चोदयन्त्यपराः। कुसुममण्डलमध्यवर्तिनदीद्वीपमेत्य तत्र स्वागमकांक्षिभिः कामुकैस्सह आश्लेषसुखमन्वभवन् काश्चन। पूर्वरात्रावनुभूतशिष्टं विप्रलम्भशृङ्गारसुखं वाञ्छन्त्य काश्चन तस्थुः। कामेच्छारूपकुठारेण वियोगाख्यकवाटमुद्घाटय कामुकैः कुसुमशयने सङ्गता अभूवन्नपराः स्त्रियः।

उत्तमाङ्गार्हप्रसूनप्राशस्त्यमालक्ष्य, स्वत एवागच्छद्भिः भ्रमरैरिव नारीमणीनामौन्नत्यं दृष्ट्वाऽऽगच्छद्भिः प्रियकामुकैः समेता नायिकाः स्नातुमगच्छन्। उद्दिष्टपत्तनं गत्वा इतो नीतानि क्रयार्हवस्तूनि तत्रावतार्य ततो विनिमयात्मना वाञ्छितवस्तून्यादाय समुद्रतीरं प्रत्यागतां नौकां दृष्ट्वा वणिग्जना इव वेगैः नदीप्रवाहमालक्ष्य जनास्तुष्टा बभूवुः।

## ४. गजशृङ्गारदृश्यम् 41-55

नगरेऽस्मिन् नानाकक्ष्यालङ्कृतभवनान्तिकवर्तिमदगज एक , निकटवर्तिनीं करिणीमालोक्य मोहपरवशः सन् पालकेन चोद्यमानोऽपि ततो नैव चचाल। नारीगणं निजस्कन्धेन वहन्ती मन्दगमना सा करिणी मदगजासक्तमानसा सती तदन्तिकमाययौ। भवनाग्रनिहितां धावनोन्मुखीं व्याघ्ररूपिणीं सालभञ्जिकामवलोक्य, "सजीवोऽयं व्याघ्रः कदाचित् प्रियवारणोपरि पतित्वा हन्यादपि" इति भ्रान्त्या भीतभीता सा करिणी निजस्कन्धोपविष्टाङ्गनानां त्रासमुत्पादयन्ती पालकाज्ञामप्यनादृत्य पलायितुं प्रावर्तत।

पलायनोद्युक्तकरिण्या अवस्थामवलोक्य मत्तेभः अङ्कुशाभिघातेनाप्यनिरुद्धगतिः, अशनिध्वनिसमं कूजन् प्रतस्थे। गजपालोऽपि कृत्रिमव्याघ्राधिष्ठितभवनात् गजं दूरमानीय करिण्या सह तं योजमामास। तदा करिणीपृष्ठाधिरूढानां भयविह्वलानां स्त्रीणां भीतिं स न्यवारयत्। तदेतत् भयनिवारणदृश्यं, प्रतीपवायुवेगेन कुमार्गगामिनं छिन्नरज्जुबन्धं पोत महता प्रयत्नेन सन्मार्गमानाय्य पोतगतजनानां, भयं निवारयतो नायकस्य कृत्यमनुकुर्वदिव।

## ५. कामविकारगोपनम् 56-70

समरकर्मव्यग्राः पक्षप्रतिपक्षभटाः सामरस्यधिया युद्धात्प्रतिनिवर्तितुमिच्छन्तोऽपि जनापवादभयात् तथा कर्तुमशक्ताः क्लिष्टां दशां प्राप्नुवन्तीति लोकप्रसिद्धमेतत्। एवमेव नृत्यवाद्यगीतादिश्रवणापहृतधैर्या युवानो युवत्यश्च अन्योन्याश्लेषमिच्छन्तोऽपि पूर्वप्रवृत्तप्रणयकलहस्मरणजनितलज्जया तथा संश्लेष्टुमशक्ताः क्लेशमन्वभवन्। कामविकारं नेत्रसंज्ञया अन्यासंवेद्यं कर्तुं प्रयतमानानां तत्रत्यानां कामुकानां कृत्यं, नेत्रघूर्णनादिना सुरापानजनितं मदं अन्यासंवेद्यं गोपायितुमभिलषतः सुरापायिनश्चेष्टितमिवासीत्। इत्थं वगैनदीप्रवाहः कामप्रवाहसुराप्रवाहाभ्यां साम्यमावहन्नशोभत।

## ६. स्त्रीणां नदीविहरणप्रकारः 71-99

मीनाकृतिमकरवलयाख्यशिरोभूषणभूषितफालतलाः स्त्रियः, नवजलावगाहखेदापनोदनेच्छया पोतान् विसृज्य तीरमाजग्मुः। अनलप्रक्षिप्तागरुपरिमलधूमेन निजार्द्रकेशान् ता अशोषयन्। तच्च धूमसौगन्ध्यं तीरोद्यानवनेषु प्रसृतमभूत्। वक्षोजालङ्कृतचन्दनामोदो दिशः सर्वाः प्रासरत्। कटिगतनीलकोशात् मेघनिचयनिस्सृतचन्द्रमण्डलमिव वर्तुलश्वेतपात्रमादाय मधुना तदापूर्य करतलैरङ्गना अवहन्। करतलगतं वर्तुलपात्रं

राहुग्रस्तचन्द्रबिम्बतुल्यमाबभौ। चन्द्रसदृशपात्रगतां सुरां कुमुद-समानवदनेषु कृत्वा चन्द्रकलां देवाङ्गना इव ता अपिबन्।

धवलदुकूलालङ्कृतकायास्ताः तैरेव दुकूलवसनैः कुन्तल-जलनिष्पीडनार्थं केशपाशान् मण्डलाकारेणावेष्टयन्। रक्त-चन्दनरसागरुखण्डघनसारादीन् मेलयित्वा शिलोपरि निष्पिष्य घर्षयामासुः। घर्षणवेगेन यागकुण्डोत्थितानलशिखासवर्णं तद-रुणं ददृशे। नदीपूजायै सहानीताः कनककर्कोटकमत्स्यप्रतिमा नवनीरप्रवाहे प्रक्षिप्य 'सस्यसमृद्धिमूलकं देशोऽयं पुष्टो भवत्व'ति प्रार्थयन्त्यस्ता नदीदेवतां ववन्दिरे।

प्रार्थनामन्त्रैव अकिञ्चनानामाकिञ्चन्यं स्वयमनुमाय धर्मबुद्धया दानकर्मणि प्रवर्तन्ते ताः। शाणोल्लीढनीलमणि समकेशपाशान् भ्रमरझङ्कारनादितान् दशविधशीततिक्तवासना-द्रव्यरूषितान् कृत्वा काश्चन नद्यां स्नानमाचरन्ति। तैलनिवारक-चूर्णप्रयोगेण तैलार्द्रकेशान् क्षालयन्ति अन्या अङ्गनाः। माला-चन्दनकस्तूरीभूषणादिद्रव्याणि वेगैनद्यां प्रक्षिपन्त्यपराः नद्या अलङ्कारार्थम्। सुरापानविमुखायां नद्यां सुरां प्रक्षिप्य तां सुरा-मपाययन् काश्चन स्त्रियः। वल्गुवलयवेष्टितकराणां नारीणां वक्षोज-वदननयनानि जलताडनकर्मणा रक्ततां प्रपेदिरे। निजपतिभिः सार्धं जलक्रीडायामेकवारं कृतायामपि पुनरवगाहनेच्छया

तस्मिन् सलिले निहितदृष्टीनां नारीणां कमलनयनानि कुसुमशरस्य मदनस्य सुमशरतुल्यानि सुतीक्ष्णान्यदृश्यन्त।

७. कलुषिता नदी *100-111*

नदीगतकदलीदण्डेषु क्रमेणैकैकं हस्तावलम्बनं कृत्वा युवानो विजह्रुः। केतकीकुसुममकरन्दान् तरङ्गफेनेषु प्रकीर्य केचन मोदमाविष्कुर्वन्तिस्म। वाञ्छितपोतानास्थाय तान् नदीप्रवाहगमनानुगुणमचोदयन्। प्रवाहाभिमुखचोदनश्रान्ता अन्ये युवकाः तदनुगुणमेव स्वयमपि गत्वा अक्रीडन्। केचन युवानः तीरमारुह्य नदीतीरबद्धक्षुद्रगृहेषु अन्नं सज्जीकृतवतीनां युवतीनां सकाशात् अन्नग्रहणेन प्रीता भवन्ति। अन्नदानच्छलेन तनुमध्याभिरङ्गनाभिः स्वयं वृताः केचन युवानस्तासां कन्दुकवस्त्रादिवस्तूनि चोरयित्वा पलायन्तः ग्रहणोन्मुखास्ताः विफलप्रयत्नाः कृत्वा नदीजलमाविशन्ति। कृपाणतोमरहस्तानां उभयपक्षभटानां अन्योन्यकलहेन, पक्षद्वयगजानां परस्परसङ्घट्टनेन च कलुषीकृता समरभूमिरिव स्वतः स्वच्छसलिलापीयं नदी जनावगाहनकोलाहलेन नितान्तंकलुषिता निर्मलतामजहत्।

८. चन्द्रोदयः *112-125*

भ्रमजनकं गाढान्धकारं निवारयन् निशापतिर्निशामुख आविरासीत्। तदा मदुरानगरवासिनो जनाः परिसमाप्तस्नान-

कर्माणो मदुरां प्रति प्रस्थातुमारेभिरे। नवनदीजलावगाहनोपयुक्तवसनभूषणादीनि विहाय प्रफुल्लप्रसूनाङ्गदकर्णाभरणमुक्तामालादिभिः सायमात्मानममण्डयन्। नदीदेवताप्राशस्त्यपराणि, तथा देवताप्रार्थनात्मकानि च गीतानि ते जगुः। तथा नृत्यन्तीनां नर्तकीनां नर्तनानुगुणस्तालरवस्तदा शुश्रुवे। मधुपानलोलुपा भ्रमराः गायकाननुसृत्य गच्छन्तः तत्प्रतिद्वन्द्वितया रीङ्काररवमुदपादयन्। कुन्तलालङ्कृतप्रसूनस्रवन्मधुपानेच्छया भ्रमराः भामिनीनां कुन्तलमभितो व्यापृताः मधुरं गायन्ति। इत्थ जनाः सर्वेऽपि दक्षिणाभिमुखमगमन्। भूधराग्रप्ररूढकुसुमलताधिष्ठितानिलाऽऽनीयमानमेघस्य व्योम्नि परितो व्याप्तिरिव सौधोपरिस्थिताङ्गनाकरवर्त्यगरुधूपः, पवनानीयमानो मधुरानगरवीथीं परितः प्रसृतः परिमलभारममुञ्चत्।

९. दानशीलः पाण्ड्यराजः *126-131*

अपेक्षितकनकदानेन दरिद्राणां कवीनां च हस्तं पूरयति पाण्ड्यभूपालः। तद्भूपालपाल्यमाना वैगैनद्यपि निजप्रवाहेण केदारानाविश्य तान् स्वर्णखण्डैरापूरयन्ती भूपालकृत्यमनुकरोति। एवंविधा नदी, अन्नाहारादिसमृद्धिमूलकं जनानां दुर्भिक्षं दूरीकुर्वन्ती मदुरानगरं प्रविशति। एवंविधनद्यालङ्कृते पत्तने गायकाः, नर्तकाः, अन्ये जनाश्च एकीभूय "तवायं महिमा सर्वदाऽकुण्ठितो भवत्वि"ति वैगैनदीं राजानं च प्रशशंसुः।

XI

# एकादशगाथा (वैगैनदी)

गाथाकर्ता—नल्लन्दुवनार्                                स्वरकर्ता—नागनार्

## १. ज्योतिःशास्त्रतत्त्वम्                1-15

[एका नायिका पुरुषं कञ्चन कामयते। स्वाभीष्टवराय कन्यकां दातुं मातापितृभ्यामप्यङ्गयकारि। शुभवार्तामिमां नायकाय निवेदयितुं चेटी वाञ्छति। नवजलस्नानासक्तचित्त नदीतीरवर्तिनं नायकमवलोक्य वैगैनदीमधिकृत्य दूत्या गीतं गानमेव एतद्गाथात्मना परिणतम्। ]

चन्द्रकलाकलितविस्तृतव्योममार्गे मेषवीथी, वृषभवीथी, मिथुनवीथीति तिस्रो वीथ्यो वर्तन्ते। वृषभमिथुनकर्काटकसिंहराशयो मेषवीथ्यां, कन्यातुलामीनमेषराशयो वृषभवीथ्यां, वृश्चिकधनुर्मकरकुम्भराशयो मिथुनवीथ्यामिति क्रमेण नवग्रहाधिष्ठानभूता द्वादशराशयोऽपि वर्तन्ते। एवं विभक्त द्वादशराशिचक्रे शुक्रग्रहो वृषभराशिं प्रविशति। अङ्गारको मेषराशिमाविशति। पदार्थतत्त्वविचारहेतुभूतो बुधग्रहो मीनराशिं विशति। गुरुग्रहः शनिक्षेत्र-

भूतमकरकुम्भराश्यनन्तरवर्तिमीनराशौ वर्तते। यमसोदरः शनिग्रहो धनुरनन्तरवर्तिमकरराशिमागच्छति। एवंलक्षणोपेतश्रावणधनिष्ठानक्षत्रयुते दिने राहुः चन्द्रं ग्रसति। मलयानिलः प्राच्यभिमुखं वाति। निदाघानन्तरकालिको वर्षाकालः समाययौ। एतादृशग्रहसमावेशे प्रसक्त वृष्टिर्नूनं भवेदिति ज्योतिःशास्त्रकाराणां निर्णयः। तदनुसृत्य पाण्ड्यदेशस्थ 'शेय्यै' संज्ञकपर्वताग्रे महान् वर्षः पतति। वर्षासलिलं कूलमापूरयत् वैगेनद्यां प्रविशति।

## २. तीरसोपानदृश्यम् *16-30*

महीधरमहोन्नतशिखरशोभिनः पुन्नागपादपाः। तीरप्ररूढाः पुन्नागविशेषतरवः। भ्रमररीङ्कारपूर्णचम्पकवृक्षाः। शीतलप्रकृतयो 'वाल्वीर' महीरुहाः। शाखोपशाखप्ररूढा 'वेङ्गै' वृक्षाः। 'अलिरिकान्त' तरवः। पवनावेगप्रफुल्लकुसुमसनाथा नीलवृक्षाः। एवं नानापादपप्रसूनानि कीचकवनमध्यं सवेगमानयन्ति निर्झराः। वनमध्यसञ्चितप्रसूनराशिं जलप्रवाहः 'तिरुमरुदत्तुरै'नामकनदीस्नानघट्टसोपानमानयति। कुसुमावृतं स्नानघट्टं दृष्ट्वा केचित् "किन्नु कुसुममण्डपो निर्मितः?" 'इति मन्यन्ते।' "सर्वाभरणालङ्कृतवैगैनदीनाम्न्या अङ्गनायाः कुसुमवसनं किन्विदम्" इत्यपरैरूह्यते। सुरापूरितवदनाया भूदेव्याः किन्नु कण्ठभागोऽयमित्यपरैरनुमीयते।

### ३. न कदापि शुष्यति *31-40*

शुक्लपक्षचन्द्रः दिनदिनाभिवृद्ध्या सकलकलापूर्णः सन् स्वीयज्योत्स्नया सर्वान् लोकान् प्रकाशयन् स्वयं च प्रकाशते। एवमेव वर्षाजलं पर्वताग्रात् पतित्वा नानाकुल्यासलिलैः मध्ये समेतं सत्, अन्ते महाप्रवाहरूपेण वैगैनदीं प्रविशति। प्रविष्टं तदेव सलिलं नदीप्रवाहनामकं सत् केदारानाविश्य सस्याभिवृद्धिद्वारा जनान् रक्षति च। देवताहारभूतस्य पूर्णचन्द्रस्य कृष्णपक्षे क्रमेण ह्रास इव नदीप्रवाहस्यापि कदाचित् ह्रासो भवति। परन्तु, अमावास्याचन्द्रस्येव सार्वकालिकनाशो वैगैनद्याः नैतावता केनापि दृष्टपूर्वः कृष्णपक्षाष्टमीचन्द्र इव नदीप्रवाहः सर्वदा अर्धपरिमाणो विराजत एव। हे नदि! पर्वतमार्गेण बहूदूरमागतश्रान्ता नानाभरणमण्डिता त्वं सर्वदा मन्दगमना भव।

### ४. लोकोपकारः *41-49*

शृङ्गाराधिक्यं वहता गान्धर्वविवाहेन नायकैः सह आदौ रमित्वा, ततः अल्पशृङ्गारवता ब्राह्मविवाहेन तानूढ्वा, मयूरसवर्णाः स्त्रियः पतिगृहेषु वसन्ति। जलसम्पत्समृद्धे हे वैगेनदि! इत्थं त्वमपि त्वज्जन्मस्थलमचलं विहाय पतिगेहात्मकं जलधिमेकाकिनी प्रविशसि। तवेदं कर्म सर्वथा साध्विति ब्रुवते

केचित्। सेनाभिस्सह विपुलायतनयनां नायिकां नयन्तं नायकं नायिकापक्षवर्तिबान्धवा अनुगच्छन्तः तं नायकं तत्कर्मणो यथा निवारयन्ति, तथा मदुरानगरजनाः समुद्राभिमुखगामिनीं वैगैनदीं सेतुबन्धनेन निवार्य स्थिरप्रतिष्ठामकुर्वन्। निवारितगति-रिय नदी स्नानपानादिना सर्वोपकारिणी भूत्वा अत्रैव स्थिरवासं करोति।

## ५. अपरा समरभूमिः                    50-61

इत्थं लोकोपकारार्थं नित्यवासं कुर्वन्त्या नद्यास्तीरे युवका युवत्यश्च पङ्क्तिशस्तिष्ठन्ति। तेषु केचन श्वेतकृपाणान् हस्तेना-दाय भ्रामयन्ति। ज्वलच्छूलपाणयोऽपरे चोदनादण्डान् हस्तेन वहन्तः बद्धपताकं रथमारुरुहुः। पक्षिवत् त्वरितगमनशीलान् वाजिनः, स्वर्णपट्टालङ्कृतफालतलशोभिगजांश्चारुह्य तान् नदी-प्रवाहाभिमुखं नीत्वा, नदीं कलुषितजलां कुर्वन्त्यपरे। सलिल-भरितचारुवंशनालद्वारा जलं प्रयुज्य ताडयतामुपरि केचित् पयः-पूर्णवर्तुलयन्त्रविशेषप्रयोगेण तान् सेचयन्ति। सुगन्धिप्रसूनमालया ताडयतामुपरि परिमलसलिलपूर्णविषाणद्वारा सलिलं प्रयुज्य तान् सिक्तवसनान् कुर्वन्त्यन्ये। प्रसूनमालाङ्कृतकुन्तलाभिः युवति-भिस्सह सदा विहरद्भिर्युवकैरधिष्ठितेयं तीरभूमिः, रथमास्थाय

अरिपक्षविजयपूर्वकं युद्ध्यतः पाण्डयभूपालस्य समरभूसमा व्यराजत।

### ६. प्रसन्नसलिलम् 62-73

जलक्रीडासक्तमानसास्तरुण्यः एकत्र सङ्गता बभूवुः। परिमलप्रसूनग्रथितमालां उरसिदधाना नूतनानाभरणालङ्कृतास्तन्व्यः स्वर्णमालाविभूषितकण्ठयश्च ता अत्राजग्मुः। युवकैः सह मधु पीत्वा ता नितान्तमानन्दमन्वभवन्। अन्योन्यपिनद्धसर्पदम्पतीवत् परस्पराश्लिष्टकायाः तालबद्धसङ्गीतरसपूर्णश्रवणपुटाः लावण्याख्यं मधु नेत्रैर्णवान्योन्यं पिबन्तः, अनवधिकानन्दसागरे न्यमज्जन्। व्योमगामिनां देवानां विमानगमनमपि अच्छस्वच्छैर्वैगैनदीजले प्रतिबिम्बवत् सर्वैर्द्रष्टुं शक्यते। 'हे नदि! वर्षाकाले कालुष्यमवाप्य घर्मकाले प्रसन्ना भूत्वा त्वं प्रवहसीत्येतत् अतिविचित्रमस्ति।'

### ७. धनुर्मासव्रतम् 74-92

घोररवा जलदाः, आकाशादन्तर्हिता अभवन्। शीतले उषःकाले हिमवर्षः पतति। तदा दिनकरः नाप्यधिकमौष्ण्यं जनयति। आरुद्रानक्षत्रयुता पौर्णमासी। धर्मशास्त्रविशारदा विप्राः, आरुद्रानक्षत्राधिष्ठानदेवस्य परमशिवस्य पूजामाचरन्ति। धृतयज्ञोपवीता विप्राः पूजासामग्रीभरितस्वर्णपात्राणि करे वहन्तः

सञ्जास्तिष्ठन्ति। 'देशोऽयं सदा जलसमृद्धो भवतु' इति प्रार्थयन्त्यो वलयवेष्टितहस्ताः अनूढकन्यका उषस्युत्थाय व्रतानुष्ठानाङ्ग धनुर्मासस्नानमाचरन्ति। व्रतप्रक्रियाकुशला विप्राङ्गनाः कन्यकानां व्रतानुष्ठानविधिं बोधयन्ति। जलभरितवालुकाप्रदेशात् शीतो वायुर्वाति। श्रुतिविशारदा विप्राः नदीकूलेऽग्निं प्रज्वाल्य वेदविधिना यजन्ति। वर्तुलज्वालामालाकुलाग्नेः समीपमेत्य निजार्द्रवसनानि अग्नौ शोषयित्वा कन्यकाः शैत्यबाधामपोहन्ति। हे वैगैनदि! यागे विप्रैरर्प्यमाणं हविः तवातीव प्रियतममासीत्। अयि नदि! अनाघ्रातविद्यागन्धैर्बालिकैस्सह विहरन्तीनां व्रतोद्यतानामासां कन्यकानां धनुर्मासस्नानकरणभाग्यं यदद्य लब्धं, तत्तासां जन्मान्तरतपोमूलकमेवेति तर्कयामि। त्वमेव ब्रूहि; किमन्यत्कारणं भवितुमर्हतीति॥

## ८. मालानिर्माणम् *93-105*

इत्थं धनुर्मासस्नानासक्तासु तासु कन्यकासु एका नीलकुसुमे निजश्रोत्रयोर्दधाना अन्यां साकूतमपश्यत्। एवमनया दृष्टा अपरा काचित् रक्तोन्नतस्कन्धयुता कर्णकृतनीलाशोकपल्लवकान्तिप्रसारेण तस्याः श्रोत्रवर्तीनि नीलप्रसूनानि रक्तवर्णयुतान्यकरोत्। कुण्डलालङ्कृतकर्णाभ्यां कुवलयप्रसूनधारिणमेकामवलोक्य स्वाभाविकनयनद्वयवतीयं, कर्णपार्श्वद्वयनिहितकुसुम-

मालालङ्कारेण नयनचतुष्टयवती सञ्जातेत्यूचुः काश्चित्। तथा तस्या मुखमण्डले रक्तवर्णतिलकं निधाय, रक्ततिलकरूपतृतीयनयनसहितां तां साक्षात् परदेवताया अपरावताररूपिणीममन्यता परा। धृतप्रवालवलयामपरां समवलोक्य आत्मानमपि मण्डयितुकामा एका मरकतमणिनिभकुवलयदण्डखण्डग्रथितवलयं हस्तेन दधार। 'कुलरि' प्रसूनमालानिर्माणव्यग्रामेकामालक्ष्य तस्या हस्तलाघवं द्रष्टुमसहमानाऽपरा 'तिष्ठ तूष्णीं' इति कथयन्ती मल्लिकाप्रसूनस्रजं स्वयं वितेने। एवं अन्योन्यस्पर्धाप्रदर्शनपूर्वकं ताः क्रीडाकर्मनिरताः कालमनयन्

## ९. मुग्धा काचित् *106-114*

कदलीदण्डावलम्बेन वैगैनद्यां प्लवमानः कश्चित् कामुकः, तीरे बन्धुबृन्दैः सह स्थितां काञ्चित् कन्यकामवलोक्य मोहपरवशोऽभूत्। मोहापहृतचित्तस्य तस्य हस्तात् स्वत एव च्युतः स कदलीदण्डः प्रवाहवेगेन दूरं नीतः। कामुकस्तु तस्यां कन्यकायामेव निर्निमेषां दृष्टिं बबन्ध। कन्यकान्तिकगमनाभिलाषिणं त विफलप्रयत्नं कृत्वा प्रवाहो यथेच्छया तं यत्रकुत्राप्यनयत्। मात्रा सह कूलवर्तिनी सा तत्र स्थातुमपारयन्ती मोहपरवशा कन्यका तमनु तीरमार्गेणाधावत्। पुत्र्याश्चित्तवृत्तिमजानती माता, 'एकाकिनी मागच्छ। निवर्तस्वास्मन्निकटमि' त्युच्चैरकूजत्।

इतिकर्तव्यतामूढा कन्यका पुरोगन्तुमपारयन्ती तत्रैव स्थातुमप्यशक्ता रुरोद। रक्तवर्णनदीजलप्रवाह इत्थं कामुकजनमनःक्लेशकरोऽभूत्।

## १०. नदीदेवतायां वरप्रार्थनम् 115-121

हे नीलसलिले ! अस्मत्पतिः निरवच्छिन्नकण्ठाश्लेषसुखं यथा दद्यात्, येन च वयं तुष्टा भवेम, तथाऽस्माननुगृहाणेति काभिश्चिदङ्गनाभिः प्रार्थ्यते। पुष्यमासेऽस्मिन् रक्तिमानं विहाय, प्रसन्नधवला भूत्वा, स्नानयोग्या त्वं विराजस इति केचित्कथयन्ति। "भ्रमराः कुसुमानीव नः प्रियनायकोऽस्मान् क्षणमप्यवियुज्य सार्वकालिकसङ्गमसुखं यच्छतु। तत्कृते भवतीं प्रार्थयामः" इति वरं याचन्ते काश्चन वध्वः। "नित्ययौवनं, बन्धुवित्तसमृद्धिं, 'वृद्धे'ति जनापवादश्रवणदौर्भाग्यहीनतां चास्माकमनुगृहाणे"ति अन्या अङ्गनाः वरमभिलषन्ति। वध्वः, कन्यकाश्च नदीस्नानपूर्वकं व्रतान्यनुष्ठाय नदीदेवतामुद्दिश्यैवं याचन्ते वरान्।

## ११.भ्रमरगीतम् 122-133

द्रष्टृसन्तापजननीं सुन्दरीमिमां पश्य त्वम्। मदनायुधरूपे मदनलावण्यपुञ्जकोशायमाने अपराया नयनेऽवलोकय त्वम्।

मधुस्रवन्नीलप्रसूनमालामण्डिताङ्गनाकरनिवारिता अपि मधुपिपासवः तासां कुन्तलाधिरूढाः सन्तो भ्रमरा वीणासमं गायन्ति। तदेतद्रमणीयं दृश्यं दृश्यतां भवद्भि गानप्रतिपाद्यार्थावबोधमन्तरा अव्यक्तवर्णमधुरं गायतां द्विरेफाणां गानवैखरीयं श्रूयतां भवद्भिः। पक्षान् प्रसार्य रागतालानुगुणं नृत्यतां भ्रमराणां रम्यनिवहानवलोकय त्वम्। वाञ्छितकुसुमग्रहणोद्यतायाः कस्याश्चित् स्त्रियश्चेष्टितमेतत् सोढुमसहमान इव भ्रमरः कश्चित् तामभितो भ्रमन् तदुपरि पतित्वा हिनस्ति। द्वितीयवारं युयुत्सुरिव तदुपरि पतनार्थं क्रोधेन सवेगं सरोषं चागच्छतः अशान्तकोपस्य चेष्टितमेतत् आलक्ष्यतां त्वया।

(तत्र सन्निहितेषु कामुकेषु एकोऽपरं दृष्ट्वा इत्थं सम्बोध्य इमानि विचित्रचेष्टितानि तस्मै प्रदर्शयति)

१२. भाविजन्मनि स्नानप्रार्थनम् *134-140*

पावनरम्यगीतात्मक'परिपाडल्' गाथागीयमानपयःपूर्णे हे वैगैदेवते! चारुभूषणभूषितानां कमनीयफालतलोपेतानां बालिकानामपि कामरसाभिरुचिं जनयसि त्वम्। पूर्वजन्मकृतपुण्यवशात् अस्मिन् जन्मनि त्वयि स्नानकरणभाग्यमस्माकं लब्धम्। भाविजन्मन्यपि भाग्यमेतत् यथा नः लभ्येत तथाऽस्माननुगृह्णीष्व॥

XII

# द्वादशगाथा (वैगैनदी)

गाथाकर्ता— नल्वयुदियार्                                        स्वरकर्ता—नन्नागनार्

१. अपरसमुद्रः                                        1-8

[देशान्तरं गत्वा निर्दिष्टकाले अनागतं नायकं स्मृत्वा नायिका नितरां खिन्नाऽभूत्। चेटी तां प्रियवचनैराश्वासयति। वर्षाकालोऽपि समाययौ। प्रतिनिवृत्तो नायकः सानुचरो वैगैनदी कूले भाषमाणस्तिष्ठति। यदृच्छया कूलमागता चेटी जलावगाह-दृश्यवर्णनव्याजेन स्वापराधपरिहारपूर्वकं नायकस्य नायिका-गृहगमनत्वरामुत्पादयति। चेटीकृतावगाहनसम्बन्धिनो विषया गाथायामस्यां वर्ण्यन्ते।]

पवनप्रेरिताः पयोधराः विद्युतमन्धकारं च पर्यायेण प्रसार-यन्तः सानुचराः 'शय्यै'पर्वतशिखरमभिव्याप्य निर्विरामं जलम मुञ्चन्। पर्वतसानुप्रदेशवर्तिपवनोध्दूतकुसुमभारभरितो वृष्टजलप्रवाहो वैगैनदीमाविशत्। बिन्दुबृन्दाञ्चितस्फुरत्फणामण्डितभीषणपन्न-गस्य नाम्ना प्रसिद्धं नागवृक्षं, तथा अगरुपुन्नागचन्दनवृक्षांश्च वेगेन प्रवाहोऽयं व्यथयति स्म। तकरदेवदारुपादपैस्सह वेगेन'प्रवहन्तीं

नदीं दृष्ट्वा, महासमुद्रः किमुत्कुद्धस्तीरं भित्त्वा प्रवहतीति जना मेनिरे।

## २. अलङ्करणम् 9-27

सुभगशीतसलिला, कुसुमभरिता च वैगैनदी मदुरानगर-प्राकारभित्तिं भेदयन्ती प्रवहतीति वार्तां जना अशृण्वन्। श्रुत-मात्रेण तेषामवगाहनेच्छा उत्कटाऽभूत्। प्रयाणोन्मुखेषु तेषु काश्चन नार्यः तटित्प्रभासमानभासमानाभरणैः आत्मानम-मण्डयन्। काञ्चनपट्टमयप्रसूनालङ्कृताऽपरा बभौ। कायधृतं चन्दनरसलेपनमपमार्ज्य, अगरुमिलितचन्दनमण्डिता अन्या अशोभत। नीरदनीलकुन्तलं पञ्चवेणीरूपेण बबन्धैका। परि-मलोशीरमिलितां प्रसूनमालां वेण्यां दधार। स्नानार्हचेलवेष्टित-काया काचिच्चकास।

धूसरदूषितमलिनदर्पणं, परिमलघृतेन चूर्णेन च शोधयित्वा तत्र निजकृत्रिमाकृत्रिमदेहलावण्यं कायकान्तिं च काचित् विलोकयन्ती मुमुदे। एलालवङ्गतक्कोलमिलितामोदपूगचूर्ण-मास्ये निक्षिप्य काचिदभक्षयत्। वलययुग्माङ्गदपादाङ्गुलीयक-मालाभिः मण्डितगात्रा एका सज्जाऽभूत्। आसामङ्गनानां नैसर्गिकः शरीरामोदो योजनदूरमभिव्याप्य वीजति। काचित्

मन्दगमनतुरगमास्थिता ययौ। हंसगमनाऽपरा करिणीमास्थिता प्रययौ।

३. जनवाक्यम् 28-44

तथा त्वरितगमनवाजिवाहनाः वारणवाहनाः पुरुषा अपि प्रतस्थिरे। मञ्जुनादघण्टामण्डितरथाधिरूढाः केचित् रथपिनद्ध तुरगाङ्कुशे वेधयन्तः अचोदयन्। सत्वरगामिभिर्मदुरानगरजनैः प्रशस्यमाना वैगैनदी तेषामवगाहनसुखमयच्छत्। प्रवाहदर्शन-कातराः कूलद्वयगतास्ते जनाः, अपरतीरसमाना अदृश्यन्त। तीर-मुल्लङ्घ्य आगतोऽयं जलप्रवाहः, जनदर्शनप्रवृद्धप्रेमप्रवाह इव अदृश्यत। प्रतिस्नानघट्टट पङ्क्तिशः सङ्घीभूय स्थितैः प्रवाहदर्शन-लालसैर्बहुभिः यद् बहुधा एकदैव भाषितं, तत्सर्वं पङ्क्तिशः श्रुत्वा बोध्दुं को वा प्रभवति। अथापि, अस्माभिर्यच्छ्रुतं किञ्चिद् यथामति तदधस्ताद्वर्ण्यते।

नर्तनकर्मव्यग्रासु समानयोगक्षेमासु नृत्याङ्गनासु नृत्य-न्तीषु तदङ्गतया वेणुनाद एकत्र श्रूयते। मृदङ्गादिवाद्यघोषो नृत्य-कलाश्रिय पुष्णाति। नर्तक्यो मुद्रितमुकुलितहस्ताग्रभागैः तालगतिं परिमान्ति। पश्य रम्यदृश्यमेतत्। नृत्यवाद्यकोलाहलेनैव तत्र प्रवृत्तं भाषणादिकं आनुपूर्व्येण श्रोतुमशक्यमासीत्।

४. भाषणप्रकारः 45-56

" हेयपण्याङ्गनागेहे तदङ्गालिङ्गनसुखानुभवपरो भूत्वा मे पतिर्मा व्यस्मार्षीदितिकाचित्कुलाङ्गना आदौ चुकोप। पश्चात् नूतनप्रवाहदर्शनकूतूहलेन क्षीणकोपा सा पत्या सह महोन्नतकरिणीपृष्ठमारुह्य प्रयाति। हे सखि ! एतादृशी निर्लज्जाऽङ्गना यत्कुत्रापि त्वया दृष्टा वा " इति हस्तेन निर्दिश्य काश्चन वध्वो वदन्ति। "जलमध्यवर्ती कोऽपि युवा लतासमानसुन्दर्याः कस्याश्चित् वर्तुलपीनपयोधरयोर्बद्धदृष्टिः नेत्राभ्यां पिबन्निव पश्यति। तदीयचित्तचापल्यमधीरतां च पश्य" इति काश्चन भामिन्यस्तं निन्दन्ति।

' कोऽपि सुन्दरपुरुषः पथि गच्छन्नास्ते। पारितोषिकप्रदानप्रेमवचनादिना अस्या अङ्गनायास्तेन सह परिचयलेशोऽपि नास्ति। अथापि पुरुषसौन्दर्याकृष्टचित्ता सतीयं तस्मिन् बद्धभावा स्तब्धा तिष्ठति। अपरिचितपुरुषसम्बन्धेन सम्भावितपातिव्रत्यभङ्गभयमप्यविगणयन्तीं पित्तामिमां पश्य ' इति काश्चन स्त्रियः कथयन्ति। "वधूवक्षोगतमुक्ताहारदर्शनव्याजेन निबिडपीनपयोधरौ साकूतं पश्यन् अयं युवा आनन्दपरवशस्तिष्ठति। यूनो दुराशयं स्वयं विदित्वाऽपीयं आकारगोपनेन लज्जां नैवाविष्करोति! पश्य सखि !" इत्यपरा वदन्ति। (नदीस्नानार्थं प्रथममागताः काश्चन

वध्वो नदीतीरे पूर्वं यो वार्तालापः प्रवृत्तः तत् पश्चादागतानां नारीणामित्थं न्यवेदयन्।)

५. प्रणयकलहापनोदिनी वैगैनदी  57-76

पीयूषप्रस्रवत्कमनीयकटाक्षेण निजभर्तारं साकूतं काचिदङ्गनाऽपश्यत्। तद् द्रष्टुमसहमाना नायिका सञ्जातकोपा सुगन्धिप्रसूनमालारूपेण दण्डेन तं ताडयित्वा कण्ठहारेण करौ बध्वा, 'त्वमपराधी'त्यवादीत्। वस्तुतस्तु, अकृतापराधो नायकस्तां प्रणम्य, "किं मयापराद्धमुच्यतां प्रिये!" इति बभाषे। "अन्या स्त्री काचित् त्वां साकूतमपश्यत्। तस्यामसत्यप्रतिज्ञस्त्वं तां वञ्चयित्वाऽत्रागतोऽसीति स्पष्टमवगम्यते। अयमेव त्वत्कृतोऽपराधः' इति नायिका प्रत्यब्रवीत्। "वस्तुतः नाहमपराधी; नाप्यसत्यप्रतिज्ञः; सत्यं ब्रवीमी"ति मुहुर्मुहुर्भाषमाणं यथार्थभाषिणं, परन्त्वविश्वासपात्रभूतं पतिमालोक्य मृदुगात्री नायिका पतिवचनाऽसञ्जातप्रत्यया पुनः पुनः कठिनवचनैः भर्तारमपराधिनमेव निश्चित्याऽनिन्दत्।

निर्दुष्टोपि नायकः स्वीयवचनैस्तामाश्वासयितु न शशाक। दूरीकृतपतिवाक्या नायिका तं परित्यज्य दूरतो जगाम। परिमलरक्तवर्णसलिलपूर्णकीचकनालं नायकोरसि प्रयुज्य तं सिक्तमकरो-

नायिका। रक्तसलिलसिक्तनायकवक्षो दृष्ट्वा, "अञ्जनाश्चित-नायिकानयनरूपशूलपातजनितरुधिरं किन्न्विदमि"त्यमन्यन्त जनाः।

अथापि तस्यामजातकोपो नायको दयालुः किञ्चिदपसृत्य, भूमौ पतित्वा तां प्रणनाम। पतनमात्रेण नष्टकोपा नायिका तस्मिन् सञ्जातकरुणा विस्मृतसकलापराधा सती "त्वं सत्यसन्धः। सर्वं मयैव अन्यथा गृहीतं सन्दर्भवशादि"ति ब्रुवती तमुरसा दृढमालिलिङ्ग। एवं वियोगिन्योः नायिकानायकयोः संयोगजनन-चतुरा वैगैनदी चकास्ति। (प्रथममागता नार्यः पश्चादागतानां नारीणां प्रवृत्तं रम्यदृश्यमेतत् प्रादर्शयन्।)

## ६. स्वर्लोकदर्शनम् 77-86

विजयसेनासनाथेन पाण्ड्यभूपालेन लाल्यमाना वैगै-नदी लसति। मल्लिकामुल्लैचम्पकाऽलरिकुमुदसरोजकुवलयनाग-नरवपुन्नागकुसुमानामामोद उभयकूलयोः प्रसृतो वीजति। कूल-द्वयरोधी कलुषः प्रवाहः शिलासेतुना क्वचित्प्रतिरुद्धो जलाशया-त्मना परिणतो निशामुखे अच्छस्वच्छनिर्मलो व्यलसत्। नैर्मल्या-तिशयेन स्वर्लोकप्रवर्तमानं सर्वं कार्यकलापं सलिलेऽस्मिन् विशुद्ध-दर्पण इव स्पष्टं द्रष्टुं शक्यमासीत्। अपगतान्धकारे प्रभात-

समये तु स एव प्रवाहः अवगाहनकलुषितः रुधिरारुणवर्णश्चाभूत्।

७. अपरं दृश्यम्  87-92

"फुल्लकुसुमलतासमाना रम्यकरतला काचिदङ्गना तप्तजाम्बूनदाभहस्तकर्मयुतकुण्डलमिव रक्ताशोकनवकुसुमं निजश्रोत्राभ्यामावहति। मन्दं मन्दमलसगमना प्रयाति। नायकनिक्षिप्तपादप्रतिमायामेकैकस्यामपि क्रमेण पादं निक्षिप्य प्रयान्ती सा क्वचित्पन्थानमुल्लङ्घ्य वलयवेष्टितनिजपूर्वकरेण शिरोधृतकुसुममालां समीचकार। हस्तोद्धरणव्याजेन अग्रगामिनो नायकस्य स्ववक्षोजलावण्यं प्रादर्शयत् नायिका। 'तेनेयं पुरतो गच्छतो नायकस्य कामिनी भवितुमर्हति पश्य दृश्यमेतत्" इति तत्रत्यनारीणां प्रदर्शयति पूर्वमागता काचित्।

८. नद्याः प्रवाहः  93-102

"अवगाहनरतनारीभूषणगलन्नीलमणिसम्बन्धात् तासां वसनानि विचित्रचित्रचित्रितानि लक्ष्यन्ते" इति कथयतां मदुरानगरजनानां वचांसि परितोऽश्रूयन्त। जलावगाहनेन तासां लावण्यं द्विगुणमवर्धत। सौकुमार्यमनितरसाधारणमासीत्। स्नानान्तरं अङ्गनावक्षोलग्नचन्दनरसपातेन तीरभूमिः पङ्काकुलाऽभूत्। स्नातस्त्रीसिक्तवसनप्रस्रवत्सलिलप्रवेशेन तीरभागः वर्षाकालशोभा

मवहत्। अवगाहनोत्सवोत्सुकमिदं मदुरानगरं स्वर्लोकादपि वरिष्ठमवर्तिष्ट। हे वैगै नदि! कोलाहलाकुलपुरातनमदुरानगरस्थजनानां सौन्दर्यमानन्दं च त्वमयच्छः। विपुलायतभूलोकादपि विशालं ते प्रभावं बोढुं महीधरोऽयं अद्याप्यपर्याप्त एव वर्तते।

## XIII

## त्रयोदशगाथा (महाविष्णुः)

गाथाकर्ता—नल्लेयुणियार् स्वरकर्ता—न ज्ञायते

१. वैकुण्ठलोकप्राप्तिः 1-13

नीलमणिमहीधराविर्भवद्दिवाकरसवर्णवर्णवसनकुन्तलोपेत! महामहीधरशिखराग्रप्रवहन्मणिकाञ्चनवन्निर्झराकारकुसुममालोपेत! वैनतेयचिह्नितपताकोपेत! वियद्विलसच्छीतकिरणवत् लोकरक्षणकर्मनिरत! दानवभीषणचक्रायुधालङ्कृतमहाविष्णो! वर्षाकाले पूर्वपश्चिमदिग्भागयोरेकदैवाविर्भूतादिवाकरनिशाकरतुल्ये शङ्खचक्रे द्वाभ्यामपि कराभ्यां वहंस्त्वं विराजसे। तटित्प्रभाभासुरस्वर्णमालया निर्झराकारश्वेतमुक्तास्रजा च भूषितस्त्वमेधसे। नानाभूषणभूषितं विपुलभूधरसमानं च ते वक्षःस्थलं ये भक्त्या भजन्ते ते त्वन्नित्यनिवासवरिष्ठं वैकुण्ठलोकमयत्नेन प्राप्नुवन्ति।

### २. त्वमेव सर्वम्                    14-25

समरविजयिन्! प्रभो! रूपरसगन्धस्पर्शशब्दाख्यपञ्च-तन्मात्रस्वरूपोऽसि त्वम्। तद्ग्राहकजिह्वाश्रोत्रनासात्वगाकाशरूप-पञ्चेन्द्रियस्वरूपेणापि त्वमेव विराजसे। उक्तपञ्चतन्मात्रासु मध्ये शब्दाख्यैकतन्मात्राग्राहकाकाशोऽपि त्वमेव। शब्दस्पर्शाख्य-तन्मात्राद्वयग्राहकवायुरपि त्वमेव। रूपस्पर्शशब्दाख्यतन्मात्रा-त्रितयग्राहकतेजस्स्वरूपेणापि त्वं विभासि रूपरसस्पर्शशब्दाख्य-तन्मात्राचतुष्टयग्राहकजलस्वरूपोऽपि त्वमेव। रूपरसगन्धस्पर्श-शब्दाख्यपञ्चतन्मात्राग्राहकपृथिवीरूपेणापि त्वमेव विराजसे। तस्मात् मूलप्रकृत्यनादिकालव्योमवायुतेजःपृथिवीविशिष्टैकविं-शतिभुवनानि, तद्वर्तिजीवराशयश्च त्वत्सकाशादेवाजायन्त।

### ३. त्रिमूर्तिस्वरूपः                    26-37

नीलतनुप्रतिद्वन्द्विधवलक्षीरजलधिमध्ये आदिशेषः पर्यङ्का-त्मना विराजते। तस्य सहस्रं फणाः। ते च फणाः विद्युत्प्रभा-भासमानमणिमण्डिता भिन्नजिह्वोपेताश्च दृश्यन्ते। एवंविधे अनन्तशयने तुलसीमालां धरन् योगनिद्रायां शयानो महाविष्णुरपि त्वमेव। रिपुनिरासकसैन्ययुतानां स्वजिघांसयाऽऽगतानां शत्रूणां प्राणापहारिणं जयशालिनं विचित्रनिनादोपेतं रिपुवक्षोविदारण-क्षमं वक्राकृतिं च लाङ्गूलं हस्तेन वहन् भासमानो बलभद्रोऽपि

त्वमेव स्वर्णकुसुममालामणिमण्डितविषाणसमेतो य आदिवराहः भूलोकवासिजनत्रासापनोदनेच्छया निजविषाणौ जलधेरधस्तात् प्रवेश्य, मग्नां भुवं बहिरानयत् सोऽपि त्वमेव । ब्रह्मविष्णुशिवाख्यत्रिमूर्तिरूपेण विभक्त आदिपुरुषस्त्वमेव विभासि ।

४. गरुडपताकोपेतः 384-5

निरवधिकसम्पत्समेतस्य ते विचित्रपक्षसम्पन्नो नागारिः वैनतेयः पताकतां भजते । वेदोच्चारणपटुना वेदस्वरूपेण विहगेश्वरेण मुद्रिता ते पताका अत्युन्नता विलसति । वेदप्रतिपाद्यं ते निर्मलं यशः । नीलप्रसूनपयोधि-पयोधर तिमिर-नीलमणिरूपवस्तुपञ्चकसवर्णं मनोहरं च ते नीलं वपुश्चकास्ति । शङ्खनादं वेदनादं चानुकरोति ते प्रेमवचनम् । तटिन्निनादं मेघगर्जितं च विडम्बयति ते क्रोधवचनम् ।

५. भगवतः सर्वावयवसौन्दर्यम् 46-56

भूतभविष्यद्वर्तमानकालत्रयबहिर्भूताः जीवास्त्वच्चरणनलिननित्यवासार्हा भवन्ति । जन्महेतुपुण्यपापे त्वदुपासकान् नैव स्पृशतः । सृष्टिस्थितिसंहारकारणभूतोऽपि त्वं रक्षणकर्मण्येव विशिष्याऽऽदरातिशयं प्रदर्शयसि । त्वत्करचरणनयनवदनानि पत्रमध्यप्रफुल्लनलिनदलानुकारीणि लसन्ति । बाहुवलयाङ्गदनाभी-

देशकण्ठचरणाद्यवयवास्ते राजलक्षणसम्पन्ना विशाला विभान्ति। विशालकटितलवक्षोमनस्सम्पन्न ! तत्त्वज्ञाने सदाचारे बहुश्रुतौ च ते बुद्धिः अतिनिशिता । यागानुष्ठाने त्वमादरातिशयं प्रदर्शयसि। समरकर्मणि वैमुख्यमावहसि ।

### ६. भक्तप्रार्थना *57-65*

लक्ष्मीपते ! अप्रतिहतं ते वीर्यम् । स्वभावारुणे ते नयने। जयशीलः सर्वश्रेष्ठश्च त्वत्करालङ्कृतश्चक्रायुधः। अनलनिभ-वेञ्जिप्रसूनतुलसीमालालङ्कृतवक्षस्सम्पन्न ! पूर्वजन्मकृतसुकृतपरि-पाकेन एवंलक्षणसम्पन्नं त्वां इह जन्मनि यथावद् ज्ञात्वा त्वच्चरणारविन्दयोः प्रणम्य सततं त्वत्स्तुतिकर्मपरायणाः स्मः। भाविजन्मन्यपि भाग्यमेतद्यथा लभ्येत तथाऽस्माननुगृहाणेति वारं वारं वृणुमहे वयम् ।

## XIV

# चतुर्दशगाथा (षण्मुखः)

गाथाकर्ता—केशवनार् स्वरकर्ता—स एव

### १. तिरुप्परङ्गुण्ड्रूक्षेत्रे वर्षाकालदृश्यम् *1-17*

[“वर्षाकालाऽऽगमनात्पूर्वमेव नूनं प्रतिनिवर्तिष्य” इति प्रतिज्ञाय प्रयातो नैव प्रत्यावर्तत नायकः। तेन नायिकायाः

वियोगखेदः विशेषतो ववृधे। तत्कृते सखी काचित् षण्मुख-स्तोत्रच्छद्मना 'स आगच्छेत्, प्रतीक्षस्व तं, मौनमालम्ब्यताम्' इति श्लिष्टपदप्रयोगपूर्वकं गाथामेनां व्यरचयत् कविः। ]

सम्पूर्णमेघा वेगेन कुम्भवर्षममुञ्चन्। वृष्टसलिलपूर्णविपुल-तटाकेषु प्रसूनानि विकसन्ति। श्वेतामोदकदम्बकुसुमेषु भ्रमराः मकरन्दपिपासवः सङ्गीतरवं विडम्बयन्तो रम्यरीङ्कारं कुर्वन्ति। भगवतः पुरस्तात् नृत्यन्तीनां रम्याङ्गनानां स्कन्धाः तिरुप्पर-ङ्कुण्ड्रमहीधरसानुप्ररूढकीचका इव कम्पन्ते। 'वाकै' कुसुमानुकारिचूडाभूषितमयूराः उच्चैः शब्दायन्ते। स च निनादः प्रथमं नायिकामनुभूय ततस्तां वियुज्य गतवन्तं नायकं दृष्ट्वा, "कुतः कालविलम्बः? त्वरितमागम्यताम्" इति आहूयमानस्य कस्यचिन्नाद इवाबभौ। पादपोत्फुल्लचम्पककुसुमानि काञ्चनमाला द्युतिमावहन्ति। व्याघ्रचर्मसवर्णवेङ्कैप्रसूनावृतं शिलातलं द्रष्टृणां आकारसाम्येन व्याघ्रबुद्धिं जनयति। रोदनपराणां बालिकानां स्थलमेतत्प्रदर्श्य इतो व्याघ्रः, 'इतो व्याघ्रः' इत्युक्त्वा जनन्यो भाषणपूर्वकं तासां रोदनमपोहन्ति।

जलाशयान्तिकविकसितधवल 'कान्तळ' गुच्छाः परित प्रसारिता भान्ति। तेषु च दलेषु 'तोण्ड्रि' लताप्ररूढप्रवालसच्छाय-मञ्जुरक्तकुसुमानां समवायः द्रष्टुमतिरमणीय आसीत्। प्रभो!

षण्मुख ! त्वदावासभूतोऽयंमहीधरः पूर्वोक्तचिह्नैः निदाघकालेऽपि वर्षाकालशोभां धत्ते ।

२. वैदिकाचारवर्धकः *18-32*

चूतपादपात्मकशूरपद्मविदारकशूलायुधोपेत! वर्षाकालप्रवृद्धाच्छस्वच्छाभ्रसमनसुपरिमलागरुधूपाघ्राणलोलुप ! षड्भिराननैः द्वादशहस्तैश्चोपेतस्त्वम् सर्वातिशायिलावण्यवाहिवल्लीप्रसूनं नितरां वृणीषे। "एतयः सदास्मत्सविध एव स्थित्वा, अमन्दानन्दं प्रयच्छन्त्वस्माकं" इति प्रार्थनापूर्वकं त्वदग्रे वीणावादननिरतानां नायिकानां वीणावाणीं सकुतूहल शृणोषि त्वं। भीतेन्द्रादिवित्रासकारक ! अन्वर्थद्विजशब्दवाच्यानां दयार्द्रचित्तानां ख्यातयशसां विप्राणां कर्तव्यत्वेन विहितेषु वैदिकाचारेषु श्रद्धातिशयं प्रदर्शयसि त्वम् एवंमहिमोपेतस्त्वं विभासि । जगद्विश्रुतपुराणानन्तकीर्तितोऽपि, अधिकानन्तसंख्याकाः लोकव्यापृताश्च मदीयप्रणामा लसन्त्विति प्रार्थयाना वयं प्रेमपुरस्सरं त्वां मुहुर्मुहुः मुदा याचामहे ।

XV

# पञ्चदशगाथा (महाविष्णुः)

गाथाकर्ता—इलंपेरुवयुदियार्       स्वरकर्ता—मरुत्तुवन् नलच्चुतनार्

## १. वैकुण्ठप्राप्त्युपायः 1-18

ज्ञानिजनागम्यमहिमोपेताः भूभारं वहन्तोऽपि स्वस्थानादचलितपदाः, अनन्तयशस्सम्पन्नाः, सुकृतिजनश्लाघ्यकीर्तिसम्पन्नाः चक्रवालमुख्या महीधराः भवन्त्येव बहवो भुवि। तेष्वपि भूलोकजनबुभुक्षावारणदक्षाः काञ्चनमणितर्वादिनाना वस्तुसम्पन्नाः परोपकारपरायणाः पर्वतोत्तमाः स्वल्पा एव। स्वल्पेषु तेष्वपि सुरवरवरणीयाः कुसुमाढ्यविपुलतटाकोपशोभिताः मेघावृतशिखरसनाथा वरिष्ठाः पर्वता विरलतमाः। तथाविधोत्तमाचलमध्येऽपि विश्रुतयशस्सम्पन्नो महान् तिरुमालिरुञ्चोलैसंज्ञकः अचल एव सर्ववरिष्ठो विराजते। नैल्यपाण्डराख्यान्योन्यविरुद्धरूपसम्पन्नावपि शब्दार्थाविव रक्षणरूपैककार्यकर्तृत्वेन अभेदभावमापन्नौ कृष्णबलरामौ पर्वतेऽस्मिन् नित्यवासं कुरुतः। परिमलप्रसूनगुच्छावृततुलसीमालाधारिभगवतो महाविष्णोः कृपापात्रभूता एव अनन्यमहिमोपेतं वैकुण्ठलोकं प्राप्तुं प्रभवन्तिः

नैवान्ये। इत्थं असुलभलभ्यवैकुण्ठलोकप्राप्त्युपायभूतं तिरुमालिरुञ्चोलैसमाख्यं नगोत्तममुच्चैर्गायन्तो भजेम वयम्।

## २. भगवन्निवासस्थानम् *19-29*

रम्यसहस्रफणाभूषितादिशेषावतारो बलभद्रः धवलकदम्बमालामुरसा वहति। तन्मालासवर्णः प्रवहन्निर्झरः 'शिलम्बु' नदीमाविश्य तांपूरयति। पयः पूर्णनद्यालङ्कृतो तिरुमालिरुञ्चोलै नामा भूधरः। नरा नार्यश्च महीधरेऽस्मिन् निजाभीष्टवररूपबीजमुप्त्वा काले फलं लभन्ते। तेनाचलस्यास्य प्रभावो जगद्विदितोऽभूत्। अत्र वसतः कनकाम्बरधारिणः कालमेघनिभस्य बलभद्रसहितस्य महाविष्णोः सौन्दर्यं बालातपपरिवृतनीलपर्वततुल्यमवर्तत। हे मानवाः! महाविष्णुमम्मुं सर्वदा स्मरन्तु भवन्तः। पुण्यभूधरप्रभाव उपरि वक्ष्यते। सोऽपि सावधानं श्रूयताम्

## ३. तिरुमालिरुञ्चोलैवर्णनम् *30-45*

तिरुमालिरुञ्चोलैशोभिजलाशयेषु मञ्जुपरिमलनीलोत्पलान्युत्फुल्लानि प्रकाशन्ते। जलाशयनिकटाशोकपादपशाखाः प्रसूनपूर्णा भान्ति। शाखामध्ये नानावर्णफलानि क्षुद्रशाखाश्च लम्बन्ते।

'वेङ्गै'कुड्मलानि विकसितानि विभान्ति। नानावर्णफलशाखोपशोभितोऽयं महीधरः सर्वात्मना कदम्बमालामण्डितमहाविष्णोराकारसाम्यमावहति। पयोधिपरिवृतेऽस्मिन् महीतले महनीय महिमोपेतो महाचलः पुरातन इति प्रथामभजत। द्रष्टॄणां जन्मकर्मनिरासकोऽयमचलः साक्षाद्भगवत्स्वरूप एव। हे मर्त्याः! पर्वतं प्राप्य भगवन्तं सेवितुं शक्त्यभावे स्वस्थान एव स्थित्वा भगवदवताररूपं पर्वतमेनं दृष्ट्वा वा प्रणमन्तु। तत्र निजार्भकान् उरसा वहन्तो वानराः पर्वतात्पर्वतं धावन्ति। 'मुल्लै' प्रसूनकोरका विकासश्रियं पुष्णन्ति। नीलमणिसदृशकाया मयूराः शाखाश्रयाः शब्दायन्ते। कमनीयपिककूजितनुन्नानि कुन्दपादपपत्राणि स्वतः शीर्णानि भुवि पतन्ति। बहुदृश्योपेतोऽयं महीधरो रिपुनिषूदनात्तजयसमेतमहाविष्णुं आकारेण रूपेण च नूनमनुकरोति। अत्र वेणुगानकण्ठगाने, यथाक्रमं कोकिलध्वनिं तत्प्रतिध्वनिं चानुकुरुतः। तथा तालवाद्यमृदङ्गवाद्यध्वनी, क्रमेण मयूरध्वनिं तत्प्रतिध्वनिं चानुकुरुतः।

## ४. पर्वतदिक्प्रणामः *46-53*

हे मानवाः! गृहिणीभिः मातापितृभ्यां बालकैः प्रियबन्धुभिश्च समेता भवन्तः तिरुमालिरुञ्चोलैपर्वतं भगवदपरावतारं

भावयित्वा, पर्वतदिशाभिमुखं दृष्ट्वा, इत एव प्रणमन्तु। महाविष्णुः कृपया पर्वतेऽस्मिन् नित्यं निवसति। स च निजनाभिकमलसमाननयनः। पयःपूर्णजलदनिशानीलमणिनिभगात्रः। एकविंशतिभुवनेष्वपि स्वयमाविर्भूय तत्र तत्र जनानां जनिदुःख निवारणदक्षः।

५. वेदोक्तगुणसम्पन्नः   *54-66*

मकरन्दनिष्यन्दितुलसीमालालङ्कृत! नीलाचलसन्निभ! अनन्तकीर्तिसम्पन्न! एककुण्डलधारिन्! वैनतेयाश्रितकाञ्चनपताकविशिष्ट! तीक्ष्णाऽऽनम्रलाङ्गलहस्त! निशितदण्डायुधमण्डित! करधृतशङ्खचक्र! चापबाणभूषितकर! बिन्दुबृन्दाङ्कितकृपाणहस्त! एवम्प्रकारेण लोकक्षेमकरा वेदास्त्वामुशन्ति। वयमपि तेनैव पथा सभक्तिश्रद्धं त्वां भजामः। अत्र वसन्तौ बलभद्रकृष्णपरमात्मानौ प्रणम्य तिरुमालिरुञ्चोलैभूधरप्रान्त एव वासमस्माकं विधेहीति वारं वारं वृणुमहे।

# XVI

# षोडशगाथा (वैगैनदी)

गाथाकर्ता—नलयिशियार्                                   स्वरकर्ता—नलच्चुतनार्

## १. नदीप्रवाहकृत्यानि 1-19

नीलाद्रिनिर्गतनीरप्रवाहः पर्वतवर्तिमरीचिचन्दनकाष्ठ-मणिकाञ्चनादिविविधवस्तुभिः दधिमथनोद्भूतफेनसमानफेनैश्च समेतः सत्वरमागत्य वैगैनदीं प्रविश्य, कूलान्यापूरयति। प्रवाहानीतानन्तवस्तुसमृद्धस्तीरप्रदेशः, वाञ्छिताधिकवस्तुदानेन दान-शौण्ड इति प्रथां प्राप्तस्य पाण्ड्यभूपालस्य दानसमृद्धिं स्मारयन्नशोभत।

कलुषितनवनदीप्रवाहः, तत्र तत्र स्नानघट्टेषु अवगाहमानानां जनानां मुक्तामालाशिरोभूषणकाञ्चनाभरणरत्नमुख्यान्यपहृत्य, ततोऽन्यस्मिन् स्नानघट्टे एकान्ते स्नानमाचरतां बालकानां 'मुञ्जु' संज्ञकशिरोभूषणान्यपि गृहीत्वा ततो मदुरानगरसमीपवर्तिनि स्नानघट्टे निजनायकैः सहसानन्दं सलिलावगाहसक्तानां नीलश्वेतरेखाङ्कितनेत्राणां नारीणां समीपमागत्य तासां सर्वाणीमानि वस्तून्युपायनतयाऽयच्छत्।

तालवाद्यगीतकुशला नृत्याङ्गना नृत्यवेदिकां प्राप्य मुकुलितपद्ममुद्राप्रदर्शनपूर्वकं नृत्यारम्भवेलायां भूतप्रीत्यर्थं कुसुमसहितं सलिलं भूम्यां मुकुलितकरैरर्पयन्ति। तथाविधकुसुमसलिलपूर्णरङ्गस्थलीतुल्याः राजन्तेऽत्रत्याः वैगैनदीनीराहृतकुसुमपूर्णकेदाराः। नदीपयःपोषिताः तीरवर्त्युद्यानपादपाः स्ववर्धकसलिलस्य प्रत्युपकरणेच्छयेव भ्रमरनादनादिमकरन्दमण्डितकुसुमानि सलिलेषु व्यमुञ्चन्।

## २. सखीनां परिहासवचनानि	*20-38*

वारवनिता काचित् वैगैनद्यां स्नात्वा तीरमाययौ। तामभितश्चेट्यः परिवृतास्तिष्ठन्ति। रक्तपरिमलपयःपूर्णकीचकनालान्यादाय काश्चन सख्यः रक्तसलिलेनासिञ्चन्। नारिकेलफलसमाननिजवक्षोजपतितं रक्तसलिलं एका वारवनिता। निजचेलाञ्चलेन भृशं परिमार्जयति स्म। तेन तस्या वसनाञ्चलं रक्तवर्णमभवत्। तस्याः सौन्दर्यापहृतचित्तो मुग्धः कश्चित् तां द्रष्टुकामस्तीरमागच्छत्। तं परिहसितुकामाः सख्यः आयान्तं नायकं दृष्ट्वा "नायिकेयं रजस्वला सञ्जाता मा गच्छान्तिकमस्याः, मा स्पृशैनामिति" उच्चैरवोचन्। अपार्थजनके वर्णसाम्ये स्थितेऽपि तस्याः शरीरे कुसुमजलपरिमलदर्शनेन सखीवचनं न साधु। केवलं

परिहासविजल्पितम् इति नायको निरणैषीत्। समुद्राभिमुखं वेगेन प्रयान्त्या नद्याः गतिमनुसृत्य सः अविलम्बितगतिः तामनुबुभुक्षुः तस्या गृहमगमत्। नायिकाकरार्पितपुराणाम्लसुरां पातुमप्यनिच्छन् प्रथमतस्तद्वक्षोजलग्नमरुणसलिलं परिमार्ज्य तया सह सुखमवसत्। पुनः परिहासवचनैः वृद्धाङ्गनास्तोषयितुमभिलषन्त्यः सख्यः "इयं रजस्वला सञ्जाता। वर्धतामस्या लावण्यम्" इति ब्रुवाणाः आशीर्भिस्तामयोजयन्। श्रुत्वेदं वचनं सा पण्याङ्गनबहुल लज्जिताऽभवत्।

नदीकूलद्वयप्ररूढप्रवृद्धबहुप्रसूनगुच्छभारभरिताः पादपाः पर्वतशिखरादागतेन नवजलप्रवाहेन ताडिताः स्वयमेव नद्यां कुसुमान्युद्गिरन्ति। तत्र स्नानमाचरन्तीनां मधुस्रवन्नानाप्रसूनालङ्कृतकुन्तलानामङ्गनानामुत्तमाङ्गेभ्य, तथा मालालङ्कृतवक्षसां यूनामुरोभागेभ्यश्च शीर्णानि प्रसूनानि नद्यां भूरि पतन्ति। मुक्ताफलनिभतारागणमण्डिताकाशोद्भूताया वियद्गङ्गायाः समानतां धत्तेऽयं नवनदीप्रवाहः। कुसुमपुञ्जालङ्कृता सार्वकालिकभ्रमरझङ्कारयुता वैगैनदी विभातितराम्।

### ३. मकरन्दाश्रितो महीधरः 39-47

तासां पण्यवधूनामङ्गनाश्रितारुणनयनानि असकृज्जलाव गाहन- मधुपान-विप्रलम्भादिकारणैः नितान्तं रक्तवर्णान्यदृश्यन्त।

कुन्तलगतरम्यकुसुमेषु नानावर्णरेखाञ्चिता भ्रमराः परितो भ्रमन्ति। भ्रमरावृतप्रसूनेभ्यो मधुबिन्दवः पयस्सु पतन्ति। कस्तूरिकापरिमलरसरूषितनिजोरसा नायकः कश्चित् स्नानकर्मण्युद्युक्तां वारवधूं मुहुर्मुहुःपरिष्वजति। तेन नायकवक्षे रूषितकस्तूरिकारसलेपेन कदाचित् स्पष्टं कदाचिदस्पष्टं च दरीदृश्यते। तुषारभारभरितो वंशवृक्षः, अपगते च तुषारभारे वायुना नुन्नो, वेगेनोपरि गच्छति। उपरिगतेन कीचकेन तदुपरिनिबद्धमधुमञ्चयकोशो भिन्नःसन्, अधोवर्तिपर्वतशिलातले मधुभारं विमुञ्चति। तथापतितमधुप्रवाहेण क्लिन्नः, अचलो यथा प्रकाशेत तथा विराजते दृश्यादृश्यकस्तूरिकारसक्लिन्नं नायकवक्षस्स्थलम्। मीनपताकोपशोभिपाण्ड्यभूपालेन पाल्यमाना वैगैनदी सर्वप्रशस्ता प्रदृश्यते।

### ४. नद्याः पूर्णताप्रार्थनम् *48-55*

पर्वताग्रवर्तिनः पयोधरा एकत्र शब्दायन्ते। नवनदीप्रवाह उभयकूलसङ्घट्टनेन महान्तं शब्दमुत्पादयत्यपरत्र। एवंनिनादनादिते हे वैगैनदि! शिरसि वक्षसि च मालां दधानाः पुरुषाः, सुगन्धिप्रसूनस्रग्धारिण्यो नारीमणयश्च दानपुण्यफलानुभवार्थं अहरहस्त्वयि स्नान्ति। त्वत्पूजार्हस्वर्णकाञ्चनादीनां चन्दनरसानां वस्त्रशोषणोपयुक्तागरुधूपानामाहुतीनां च सर्वकालसर्वावस्थास्वपि अनायासेन लाभार्थं अनवरतं मेघोऽत्र वर्षतु।

वृष्ट्यभावे जगति किं वा वस्तूत्पद्येत? वर्षाजलप्रवाहः त्वयि सदाऽक्षुण्णोऽक्षीणश्च लक्ष्यताम्।

## XVII

## सप्तदशगाथा (षण्मुखः)

गाथाकर्ता—नल्लयिशियार् स्वरकर्ता—नल्लच्चुतनार्

### १. स्वर्गेऽपि न स्पृहा 1-8

प्रसूनप्रस्रवन्मकरन्दसिक्तपादपसमाकुलस्तिरुप्परङ्गुण्ड्-नामा रम्यमहीधरः। करदीपिका-वाद्यसाधन-चन्दनागरु-कुक्कुट पताकादिपूजार्हद्रव्याण्यादाय भक्ताः केचन पर्वताधोदेशमागच्छन्ति। तदनुयायिनोऽन्ये मधुपूर्णप्रसून-पत्र-हस्तकर्माढ्यपट्टवस्त्र-घण्टा-मणि-पत्राकृतिशूलायुधादीनि च वहन्तः स्थलमिदमाययुः। पर्वतोपान्ते भक्ताराध्यकदम्बतरौ बलिकर्मयोग्यान् चन्दनजल-सिक्तान् छागान् बध्नन्ति पूजकाः। एवमत्रागता भक्तजनाः आसायमत्रैव वसन्तः, कदम्बवृक्षमेनं स्तुवन्तो गानविशेषैर्गायन्ति च। षण्मुखभजनसेवनापेक्षया अन्यमुत्तमं स्वर्गलोकमपि न ते स्पृहयन्ति।

२. तिरुप्परङ्गुण्ड्रे विविधघोषाः 9-21

परबलार्दनषडाननावासतिरुप्परङ्गुण्ड्रूक्षेत्रे वीणावादन-तत्परैरुत्पादितो वीणानाद एकत्र। अपरत्र प्रसूनेषु नूत्नतयाऽऽ-गत्य भ्रमतां भ्रमराणां रीङ्काररवः। नानापर्वोपेतमुरलीवादनो-त्थितो रम्यध्वनिरपरत्र। इतरत्र भ्रमरापादिता गानानुकारिरवाः। अन्यत्र मृदङ्गवादनध्वनिः। परत्र महापर्वताग्रप्रवहन्निर्झरनिनादः। अन्यत्र देवतास्तुतिपूर्वकं नृत्यन्तीनां नृत्याङ्गनानां नर्तनदृश्यम्। दक्षिणपवनोद्धूतकुसुमलताचलनदृश्यमेकत्र गायकवधूभिः गान-शास्त्रानुरोधेन गीता गानविशेषाः अन्यत्र। तालबद्धनर्तनो-द्युक्तमयूरकृतरम्यकूजितान्यन्यत्र। इत्थं नानादृश्यैः नानानिनादै-र्गीतैश्च भरितोऽयं विराजते तिरुप्परङ्गुण्ड्रूनामकः पुण्यभूधरः।

३. कुसुमच्छन्नमार्गः 22-27

कविप्रशंसनीयमहिमोपेतस्य विश्रुतयशस्सम्पन्नस्य मदुरा-नगरस्य तिरुप्परङ्गुण्ड्रूक्षेत्रस्य च मध्यवर्तिमार्गो नातिदवीयान्। सुवासनावासितचन्दनरसालङ्कृतगात्राः पुरुषाः स्त्रियश्चान्योन्यं विहरन्त एव मार्गेणानेन प्रयान्तः क्रीडासक्तमनस्कतयाऽनति-दूरमपि तमध्वानमतिदीर्घतरममन्यन्त। नारीकुन्तलेभ्यः पुरुष-

शिखाभ्यश्च गलितानि मकरन्दपूर्णकुसुमानि भुवमापूरयन् । कुसुमापूरितक्षेत्रद्वय-मध्यवर्तिमार्गो नितरामदृश्योऽभूत् ।

### ४. धूमावृतं सूर्यमण्डलम् 28-39

अमलयशस्समेते दिगन्तव्यापिमहिमान्विते तिरुप्परङ्-गुण्ड्रक्षेत्रे भगवान् षाण्मातुरो नित्यवासं विधत्ते। भिन्नभिन्न-देशागता जनाः सुगन्धागरुधूपहविर्भिस्तमाराधयन्ति। आराधन-समयोत्थितसुगन्धिधूमो देवलोकपर्यन्तं व्याप्नोति। तेन च धूमेन निर्निमेषा देवा अपि सनिमेषाः स्वस्थानादपयान्ति सूर्य-मण्डलं तु धूमपरिवृतं सदृश्यतामेति। प्रसूनमालामण्डितोरस्काः प्रकृतिसुन्दराः पुरुषाः शीतप्रसूनमालामण्डितानां हस्ताग्रावलम्बि-वलयानां प्रकृतिसुन्दरीणां नारीणामंसेषु निहितहस्ताः सन्तः सानन्दं पर्वतवर्तिह्रदान् प्रविश्य ताभिस्सह क्रीडन्ति। मकरन्दपानलोलुपा अपि भ्रमराः जनावगाहजनितध्वनिश्रवणभीत्या जलाशयो-त्फुल्लकुसुमान्यस्पृशन्तो दूरादेवाऽतिष्ठन् ।

### ५. सदाचारपरायणाः 40-46

भूधराग्राविर्भन्निर्गलधवलनिर्झरा वेगेन प्रवहन्तः कृषीव-लानां केदारान् प्रविशन्ति। निर्झरोत्पत्तिस्थले विविधाभरण-मण्डिताः स्त्रियः स्नान्ति। स्नानसमये चाभरणगलिता नीलमणयः

प्रवाहे मिलिताः सन्तः केदारान् प्रविश्य वेभयन्ति। एतादृश-निर्झरसनाथे तिरुप्परङ्गुण्ड्क्षेत्रे देशान्तरगतनायकप्रत्यागमनार्थं नायिकाः भगवत्प्रार्थनापूर्वकानुत्सवानाचरन्ति। प्रतिनिवृत्तेषु नायकेषु हर्षभरिता नायिकाः नायकैस्सह निर्दुष्टयशस्सम्पन्नायां वैगैनद्यां सकुतूहलं स्नान्ति। पाण्ड्यभूपालः सटापटललसत्तुरगबद्धरथैरावृतः मीनपताकोपशोभितरथाधिरूढश्च चकास्ति। तत्पाल्यमाने मदुरानगरे निजनायकानीतदेशान्तरद्रव्यैः जनानामातिथ्यं कुर्वन्ति नायिकाः। अन्योन्यकार्यकारणभावमापन्नैः उत्सवाचरणातिथ्य-प्रदानादिगार्हस्थ्यधर्माचरणैः नगरजनाः सदाचारमार्गावलम्बिनो व्यराजन्त।

## ६. मोक्षप्रार्थनम् *47-53*

प्रभो! षडानन! नीलमणिनिभमयूरस्ते वाहनम्। त्वदीयोन्नतपताका कुक्कुटचिह्निता चकास्ति। 'पिणिमुख'संज्ञकगजमारुह्य शूरपद्मनामानं दानवं समरे त्वमजयः। सबान्धवा वयं त्वन्निवासतिरुप्परङ्गुण्ड्भूधरमेव पूर्वोक्तविधयाऽनिशं स्तोष्यामः। त्वन्महिमैकवर्णनपरा वयमिदमेव त्वत्सविधे याचामहे यत् 'जनिदुःखनिवृत्तिपूर्वकत्वत्पादारविन्दप्राप्तिरूपं नित्यानन्दं नः अनुगृहाणे'ति।

XVIII

# अष्टदशगाथा (षण्मुखः)

गाथाकर्ता—कुण्ट्रवूनार्  स्वरकर्ता—नलुच्चुतनार्

## १. हिमाद्रिसाम्यम् 1-6

प्रभो! त्वया सह योद्धुं कृतधियां दानवानां दर्पमदं त्वमनाशयः। पयःपूर्णपृथिव्या भ्रियमाणे पयोधिमध्ये वर्षाकालीन पयःपूर्णनीलमेघवत् शूरपद्मनामा निशाचरः इतस्ततः परिभ्रमन्नवर्तत। तथा भ्रमन्तं तं त्वमहनः। त्वज्जन्मावाप्तकीर्तिसम्पन्नः समिन्धे हिमाचलः। त्वत्प्रियावासभूतोऽयं तिरुप्परङ्गुण्ड्पर्वतोऽपि कीर्त्या महिम्ना च हिमाद्रितुल्यो विराजते।

## २. व्याधाङ्गनाकोपशमनम् 7-14

तिरुप्परङ्गुण्ड्भूधरवर्तिकुसुमवाटिकायां प्रकृतिलावण्यं द्रष्टुं व्याधदम्पती अगच्छताम्। तदा स व्याधः, अच्छस्वच्छवर्णसनाथं नीलमणिसवर्णबिन्दुबृन्दाङ्कितगात्रं मयूरमेकं दृष्ट्वा तत्सौन्दर्यापहृतचित्तः स्तब्धस्तथैव तस्थौ। चारुवदना सा व्या-

धाङ्गना पतिं दृष्ट्वैवमाह, 'अरे! साकूतं मयूरं पश्यतस्तवान्त-राशयमहं जाने। सौन्दर्ये मदपेक्षया मयूरोऽयं श्रेष्ठतम इति त्वं मन्यसे किल। तदाशयगोपनेन किं प्रयोजनम्। स्पष्टं सत्य-मुच्यतामि'ति। तत् श्रुतवान् व्याधः, "हे प्रिये! अनन्यलभ्य-त्वल्लावण्यं महता प्रयत्नेनापि अलभमानोऽयं मयूरो नितरां खिद्यति। एवंविधं तस्य खेदं, त्वदीयाऽनितरसाधारणलावण्यप्रकर्षं च मनसि स्मरन् मयूरार्पितदृष्टिरस्मि। मामन्यथा त्वमाशङ्कसे" इति तामुक्त्वा तस्याः कोपं शमयामास रथवाहनषडाननिवास-तिरुप्परङ्गुण्ड्नामकक्षेत्रमेतदेवं नानारम्यदृश्योपेतं दृश्यते॥

### ३. वञ्चको गायकः 15-21

पञ्चविधसमृद्धिसम्पन्नं कमनीयं तिरुप्परङ्गुण्ड्क्षेत्रम्। अत्र अञ्जनाश्रितरम्यसरोजसमानशीतलनयनाः पण्यस्त्रियो वसन्ति। तदीयनायकस्य गात्रे नखक्षतानां दर्शनेन नूनमयं ताभिः सह गाढालिङ्गनसुखमनुभूयाऽत्रागत इति स्पष्टमहं जाने। कायकान्ति-जनककमनीयकाञ्चनाभरणमण्डलमण्डितगात्र! त्वमपि दृश्य-मेतदवेक्षस्व। नायकोऽयं नूनं परनारीलोलुप इति ज्ञात्वापि त्वं स्त्रीपराङ्मुखोऽयमिति कुतोऽपार्थप्रदैर्वीणावादनैर्मां वञ्चयसि?

नाहं विश्वसिमि त्वद्वचनमिति, असत्यवादनैर्नायकस्य पूततां निरूपयितुं आगतं नायकप्रेरितं वञ्चकगायकं दृष्ट्वा नायिकैवमाह ।

इत्थं विरहातुरनायिकाभिः समृद्धमेतत् क्षेत्रं विराजते ।

४. चित्रमण्डपः 22-29

सितप्रभासंवलितशूलसनाथ ! त्वरितगमनशीलमयूर-वाहन ! आदित्यरूप ! पादपेषु शीतपल्लवोद्गमं जनानामावेद-यन्त इव नीलमेघाः तिरुप्परङ्गुण्ड्महीधरशिखरेषु शब्दायन्ते द्रष्टृनयनप्रभापहारिण्यो गाढान्धकारनिचयभेदिन्यश्च विद्युत तदभितः प्रकाशन्ते । एवम्भूतजलधरावृतभूधरशिखरभाग पिणिमुखाख्यवारणसाम्यं, शिखरावृतविद्युत्, वारणमस्तकपिनद्ध स्वर्णपट्टतौल्यं च वहतः । भूधरान्तिकभ्राजमानो नानाचित्र विचित्रो रम्यमण्डपः कामदेवस्य इषुप्रयोगार्थं निर्मितयोधाभ्यास शालातुल्यः समिन्धे ।

५. भूधरशोभा 30-3

क्रूरघातकक्षुद्रदेवतावासमहीधरोपान्तवाटिकाः पयोधर विमुक्तपयःपूर्णजलाशयाश्च विविधप्रसूनभरिताः सन्तोऽनित साधारणीं शोभामावहन्ति । एतादृशकुसुमवाटिकाजलाशयान दृश्यं प्रसूनभरितमनोजतूणीरं अनुकुर्वदिवावर्तिष्ट । मनोभवा

पराजयं प्राप्य धावतः पिनद्धहस्ता इव वर्षाकालप्रफुल्ल'कान्तळ्' प्रसूनमालाःविराजन्ते। भ्रमराकुल'कान्तळ् प्रसूनकुड्मलानि वीणा-तन्त्रीसमीकर्तृपुरुषकरसाम्यं वहन्ति।

## ६. निर्झरः 38-50

द्यूतविद्याविशारद! द्यूतशलाकापरिवर्तनप्रवीण षडानन! त्वदीयमहीध्रे क्वणद्रम्यपयोधराः वर्षाकाले व्योम्नि रम्येन्द्रधनूंषि द्योतयन्ति। भूधरपादपविसृष्टा कुसुमवृष्टिः, वियद्गतेन्द्रधनुर्विसृष्टबाणवृष्टिमनुकुर्वतीव ददृशे। एकत्र तालबद्धनानावाद्यनिनादः। अपरत्रान्योन्यमेघसङ्घर्षणसञ्जातो रवः। एवं नानाध्वनीनां समवायः, समराविर्भूतध्वनिसदृशः शुशुभे। शिखरोत्सृष्टधवलनिर्झरसहितस्तवाचलः, मुक्ताभूषणभूषित इव चकास्ति। फलितधान्यभक्षणपरायणाः पक्षिणो नीवारसस्यमञ्जरीमभितो भ्रमन्तः शब्दायन्ते। अचलजलाशयप्ररूढप्रफुल्लनानावर्णप्रसूनानि, आनम्य जलं स्पृशद्भिः तीरप्ररूढवेतसैः सङ्घट्टितानि सन्ति। एतादृशोऽयं जलाशयः चित्रवर्णेन्द्रचापसहितव्योमसमानः शुशुभे।

## ७. देहि मे नित्यसम्बन्धम् 51-56

जयशूलपाणे! कार्तिकेय! पूजासमये भक्ता वीणातन्त्रीं प्रयुज्य गायन्ति। कवयो भक्तिगाथाः निर्माय पठन्ति। वेदविदः

श्रुतिगीतैस्त्वामुशन्ति। कण्ठे प्रसूनमाला। परितो दीपराजयः। समन्ताच्चन्दनागरुधूपा व्यापृताः। एवं त्वदर्चनोद्युक्तानां त्वय्यर्पितचित्तानां भक्तानामिव सबान्धवानामस्माकं अत्रैव क्षेत्रे त्वया सह नित्यसम्बन्धभाग्यमनुग्रहाण।

XIX

# एकोनविंशतिगाथा (षण्मुखः)

गाथाकर्ता—नत्पण्णनार् स्वरकर्ता—मरुत्तुवन् नलच्चुतनार्

१. वल्लीवल्लभः 1-7

क्रौञ्चमहीधरविदारणपटुशूलहस्त! देवलोक इव भूलोकेऽपि वस्तुं त्वं मतिमकरोः। ततः ज्ञानिभिरगम्ययशस्समपन्नं 'कडम्ब'महीरुहं प्राविशः। निजपादारविन्दभजनसुखं देवानामिव मानवानामपि दातुकामः, तिरुप्परङ्कुण्ड्क्षेत्रमागत्य वासमकरोः। देवकन्यकां देवयानीं वैदिकविधिनोद्वा देवलोके तया सह भ्राजमानस्त्वं भूलोके मानवकन्यकां नृत्यन्मयूरसच्छायां वल्लीदेवीं गान्धर्वविधिनोद्वा अत्रत्यानां नयनगोचरो राजसे।

## २. मालामण्डिता मेदिनी  8-18

मदुरानगरवासिनः पुरुषाः स्त्रियश्च शास्त्रार्थवादरङ्गे युद्धरङ्गे चाप्रतिहतजयशीला विराजन्ते। निशि शृङ्गारसुखपरा-काष्ठामनुभूय, उषसि यथाकालमुत्थाय भूलोकानुष्ठितसत्कर्म-फलानुभवार्थं स्वर्लोकं प्रयान्त इव, मदुरानगरजनाः निजपुण्य-कर्मफलानुभवेच्छया तिरुप्परङ्गुण्ड्रक्षेत्र गन्तुमुद्यताः। निज-वैभवानुसारेण भूषणदुकूलादिभिरात्मानमलश्चक्रुः। केचिद्वाजिन-मास्थाय जग्मु, अपरे रथमधिरुह्य ययुः। सुग्रथितकुसुममाला-लङ्कृतगात्राणां भूषणसुभूषितानां तेषां भूषणप्रभावलिभिः वीथीव्यापृतगाढान्धकाराः विलयमापुः। तिरुप्परङ्गुण्ड्रमदुरामध्य-वर्तिस्थलं, दिव्यदेशयात्रोद्यतैः प्रसूनमालामण्डितशीर्षैरसंख्येय-जनैः परिपूर्णमभूत्। भूधराग्रे स्थित्वा जनसम्मर्दमिमं पश्यन्तो जनाः, भूदेवी किमु प्रसूनमालालङ्कृतेत्यमन्यन्त। तत्र जन सम्मर्दोद्भूतो रवः, पयोधिपयस्सङ्घट्टनाविर्भवत्तीरध्वनिं ज्ञापय-न्निव बभौ।

## ३. पाण्ड्यभूपालवन्द्यः  19-37

घण्टानादोज्वलत्पिणिमुखवारणवाहन! निरवधिकशेमु-षीकः पाण्ड्यभूपालः। तत्समन्तात् मयूरसवर्णास्तदीयभार्याः। कालोचितकार्यकरणकुशलाः सचिवाः। अंसावलम्बिदुकूलसमेताः

सदा भगवन्नामोच्चारणपूतवचसः, उत्साहसम्पन्ना नागरिकाः ग्रामीणाश्च जनाः। एवं नानापरिवारपरिवृतः शशिकुलोद्भवः पाण्ड्यराजः शूरनारीनिवासभूतं त्वदावासपावनं तिरुप्परङ्गुण्ड्-भूधरमारुह्य ताराकुलावृतशीतकिरणो मेरुपर्वतमिव त्वां प्रदक्षिणी-करोति।

क्रौञ्चाद्रिभञ्जनशूलपाणे ! त्वदावासाचलसानुभागवर्तिनः शृङ्खलाबद्धचरणान् मदपयःपानासक्तभ्रमरकुलाकुलितगण्डस्थली-समेतमत्तेभान् मार्गमध्यादपसार्य, मार्गोपरोधनिवारणाय गज-पालाः पादपेषु रज्जुभिर्बध्नन्ति। प्रतिपर्व खण्डशो भिन्नान् इक्षुदण्डान् आहारार्थं पालकास्तेभ्यो यच्छन्ति। प्रसूनस्रङ्-मण्डितहयान् पान्थप्रयाणोपरोधनिवारणाय दूरतोऽपसार-यन्ति वाजिपालाः। रथनेतारो मार्गमध्यस्थहयान् गन्तृजन-सौकर्याय दूरं नयन्ति। इत्थं रथतुरगगजसमृद्धा भूधरसानुभूमिः, रथतुरगगजसमृद्धेन रिपुविजयप्रयाणोन्मुखेन पाण्ड्यमहीपालेन निर्मितोऽपरः सागर इवादृश्यत।

### ४. उत्सवकालीनोत्साहकृत्यानि *38-45*

पाण्ड्यभूपालेन साकं पर्वतशिखरमारुह्य भगवन्तं प्रदक्षिणी-कुर्वन्तः केजन जना वानरेभ्यः तदपेक्षितभक्ष्याद्याहारपदार्था-नर्पयन्ति। अन्ये कृष्णमुखवानरेभ्य इक्षुदण्डानाहारीकुर्वन्ति।

ब्रह्मवीणां वादयन्त्यपरे। मुरलीरन्ध्राहितकराः केचित् वेणुगानं कुर्वन्ति। वीणां समपरिमाणां प्रयुञ्जानाः केचित् नादमुत्पादयन्ति। तत्र प्रवर्तमानषण्मुखपूजापद्धतिप्रकारं प्रशंसन्तो मोदन्ते। तालबद्धवीणानादानुसारं मुरजं ताडयन्तः केचित् हर्षभाविष्कुर्वन्ति।

५. चित्रमण्डपः 46-57

पाण्ड्यभूपतिना सह भगवद्दर्शनकर्मव्यग्रेषु तेषु जनेषु केचन चित्रविचित्रचित्रितमण्डपसमीपमागत्य, अश्विन्यादिसप्तविंशतिप्रधाननक्षत्राणि, तथान्योपनक्षत्राणि, सूर्याचन्द्रमसादिप्रधानग्रहाश्चचित्राकारेण यत्र खचिता अदृश्यन्त तदद्भुतं ददृशुः। स्थलविशेषं प्रदर्श्य, 'किमिद चित्रमि'ति प्रिया काचिद्भर्तारं पृच्छति। 'रतिमदनयोः चित्रमेतदि'ति भर्ता प्रतिवदति। तत्रैव मण्डपे स्थलान्तरनिर्देशपूर्वकमन्या काचित् निजकान्तं 'किमेतदि'ति प्रश्नं करोति। "अहल्यां वञ्चयितुं मार्जाररूपेणागतः इन्द्रोऽयम्। इन्द्रेण वृता गौतमपत्नी आहल्या अत्र तिष्ठति। इन्द्रवञ्चनया भार्यामुत्सृज्य, अकाले स्नानाय प्रस्थितोऽयं गौतमः। गौतमशापेन शिलारूपतां प्राप्य, अधःपतिताया अहल्याया दृश्यमिद"मिति चित्ररूपेण मण्डपखचितं अहल्याशापवृत्तान्तं भार्यायै निवेदयति भर्ता। एवं परस्परं चित्रमण्डपगतान् विचित्रचित्र-

विषयान् शृण्वन्तः कथयन्तश्च जनाः प्रयान्ति। विशालशिलाभिरुन्नतवंशैश्च शोभिते तिरुप्परङ्कुण्डक्षेत्रपरिसरप्रान्ते चित्रमण्डपानां दृश्यं शोभनमशोभत।

## ६. भ्रान्तबालिका 58-66

बालिका काचित् भगवत्सेवार्थं मातापितृभ्यां महीधरमिममाययौ। जनसम्मर्दे प्रमादेन जननीजनकाभ्यां वियुक्ता प्रतिशिलारन्ध्रं तावन्विष्यापि तावलभमाना विभ्रान्तमतिस्तस्थौ। विस्मृतमार्गचिह्ना सा प्रत्यागन्तुमपि नापारयत् तत्रैव तिष्ठन्ती सा, 'हे मातः! ओ पितः!' इत्युच्चैः चुक्रोश तयोर्निजावस्थां ज्ञापयितुम्। समीपवर्तिगुहाभ्यः बालिकाया आह्वानध्वनेः प्रतिध्वनिरुदभवत्। अज्ञेयं बालिका प्रतिध्वनिरित्यजानन्ती नूनमयं मातापित्रोराह्वानशब्द एवेति विपरीतनिश्चया सती शब्दागमनदिशं प्रति प्रतिप्रतस्थे। तत्रापि तावपश्यन्ती, सा पुनः 'हे मातः! हे पितः!' इति आक्रन्दति स्म। यथा पूर्वं प्रतिध्वनिश्रवणं, अज्ञानात् तद्ध्वनिजननस्थलगमनं, तत्र पित्रोरलाभ इति पुनः पुनः समग्रं पर्वतमन्विष्यान्विष्य श्रान्ताऽभूत्। दिव्याचलोऽयं इत्थं भक्तानां भ्रान्तिं जनयन् विभ्राजते।

## ७. सर्पभ्रान्तिः 67-74

विख्यातयशस्सम्पन्न ! त्वदीयमहीधरे बहवो जलाशयाः। तत्तीरवर्तितरुषु परिमलवाहिकुसुमगुच्छैर्बालपल्लवैश्च पूर्णाः शाखाः जलाशयमध्यवर्तिसलिल स्पृशन्त्यो नम्राः वर्तन्ते। तत्रागता नार्य क्रीडासक्तमनस्काः पादपशाखामारुह्य कम्पयन्ति। कम्पित पादपपतितपल्लवप्रसूनगुच्छानि पयोमध्यप्ररोहन्मुकुलमध्ये पतन्ति। पतितपल्लवप्रसूनसमवायः, बिन्दुबृन्दाङ्कितपश्चमुखपन्नगभ्रान्तिं भामिनीनामजनयत्। तदन्तिकवर्तिप्रसूनमेकं, महासर्पज्येष्ठ-पुत्रताभ्रान्तिं, अन्यत्र स्थितं कुड्मलमेकं, सर्पस्य कनिष्ठपुत्रता-भ्रमंचाजनयताम्। तेन तदवलोकितवत्यो नार्यः भीतभीताः बभूवुः।

## ८. कुसमसमृद्धिः 75-84

महीधरस्थितजलाशयतदन्तिकभूमिः। तत्र पत्रानुविद्ध-बालकिसलयाः। वनितावदनानुकारि फुल्लकुमुदकुसुमानि। अबला-हस्तसच्छायपरिमळ'कान्तळ' प्रसूनानि'। कुरुक्कच्चि कुसुमानि। ज्वलद्वह्निसवर्णप्रसूनसनाथवेङ्गैपादपाः। सर्वकालसर्वावस्थाप्रफुल्ल 'कोङ्कु' वृक्षाः। कोङ्कुपादपप्रतिद्वन्द्वि 'इलव' मही-रुहाः। इत्थं मालाकारेण महीधरविकसितविवर्णनानाकुसुम-

मालालङ्कृतेयं पर्वतसानुस्थली, नानावर्णपयोधरालङ्कृतोषः कालीनाकाशसदृशी शोभते।

## ९. गजोच्छिष्टाशनप्रतम् 85-94

हे कार्तिकेय! भक्ताः त्वन्निवासमहीधरमायन्ति। कुक्कुटपताकालङ्कृतस्य त्वद्वाहनवारणस्य मस्तकं कुङ्कुमैरलङ्कुर्वन्ति। प्रसूनमिलितं सलिलं तान् पाययन्ति। वारणश्रोत्रयोः वालव्यजनान्यर्पयन्ति। प्रवालखचितदण्डानुविद्धकनकदुकूलच्छत्रं वारणोपर्यारोपयन्ति। एवं वारणं समलङ्कृत्य तेन सह त्वां प्रदक्षिणीकृत्य त्वदर्पितमानसा भक्तास्त्वां पूजयन्ति। परिमलवेणीधराः श्यामकुन्तलाः शातोदर्यो नार्यः गजभुक्तशिष्टमाहारं महाप्रसादबुद्ध्या अहमहमिकतयाऽऽदायाश्नन्ति। या नार्यः नेदं भुञ्जते ताः पतिसंयोगसुखं नैव लभन्ते। याः कन्यकाः नेदं भुञ्जते शीघ्रविवाहसिद्धिः तासां न भवति। (गजभुक्तशेषभोजनेन स्त्रीणां पतिसंयोगसुखप्राप्तिः, कन्यकानां शीघ्रविवाहप्राप्तिश्च तत्काले प्रसिद्धा आसीत्।)

## १०. प्रार्थना 95-10

कुसुमवल्लरीसमानव्याधाङ्गनावल्लीवल्लभ! श्रवणानन्दकरं मदीयं मङ्गलाशासनं शृणु। रक्तवर्णं ते वसनम्। रक्तमयं

ते प्रसूनमाला। शत्रुशोणितदिग्धत्वात् तव शूलायुधोऽपि प्रवाल-प्रभः प्रकाशते। स्फुरदनलसमं ते वपुः। प्रातःकालोदितबाल-सूर्यमण्डलनिभं ते मुखमण्डलम्। लोकाहितकारिणं शूरपद्मं समूलमनाशयः। शूलायुधेन क्रौञ्चभूधरं व्यदारयः। भूधर-मेतमागत्य कदम्बपादपमाविश्य वसन्तं त्वां स्तुमः। बन्धुसमेता वयमनुदिनं त्वां प्रणम्य भजामः। दयां कुर्वस्मासु।

XX

# विंशतितमगाथा (वैगैनदी)

गाथाकर्ता—नल्लन्दुवनार्  स्वरकर्ता—नल्लच्चुतनार्

१. वैगैनदीप्रवाहः  *1-11*

['वर्षाकाले त्वां नूनं द्रक्ष्ये' इति नायिकामाभाष्य प्रोषितो नायकः, यथोक्तं नाकरोत्। तेन नायिकायाः खेदो भृशं ववृधे। नायिकावियोगखेदं दृष्ट्वा चेटी काचित् गायकं कञ्चनान्विष्य, नायकान्तिकं प्रैषयत्। नायकान्तिकं गतो गायकः नायिकाविरहखेदवृत्तान्तं साक्षादनिवेद्य, नदीप्रवाहः, नगर-जनस्नानौत्सुक्यकृत्यमित्यादीनि परं नायकायावोचत्। वर्षावर्णन-

श्रवणस्मारितपूर्ववृत्तान्तो नायको नायिकान्तिकमागमत्। अयमंशो विशेषतो गाथायामस्यां निगद्यते ।]

पयःपूर्णपरोधराः पर्वताग्रात् परितो भ्रमन्तः सरोषाशनि-रवं जनयन्ति। निःशेषपीतपयोधिपयस्कास्ते, अचलशिलां भेदयन्त इव तत्र सवेगं वर्षन्ति। व्याघ्रमस्तकभञ्जनोद्भूतरुधिर-सिक्तवारणमस्तकरुधिररेखां क्षालयन्तो मेघाः सवेगं ववर्षुः। उषःकाले जलधिमाविश्य पीतोदकाः सन्तो दिवाकरेण साकं क्रमेण प्रतीचीं दिशं प्रविश्य, सायं सूर्यास्तमनवेलायां पर्वतमासाद्य निशि जगति कृत्स्ने निद्रापरवशे, स्वयंपरमनवाप्तनिद्रा मेघाः सलिलं मुञ्चन्त एव वैगैनदीं पूरयामासुः। पादपप्रसूनमेलन-सौरभेण, प्रसूननिष्यन्दिमकरन्दामोदेन, निदाघतप्तविपिनमध्यवृष्ट-वर्षाजलोत्पादितमृत्तिकावासनया, पादपशाखाविमुञ्चत्फलसौरभेण च सङ्गतोऽयं नवनदीप्रवाहो विचित्रसौरभभरितो विभाति।

## २. विपरीतवेषाः जनाः *12-26*

उभयकूलसमुत्थितप्रसूनवाटिकापरिमलादपि विशिष्टो यः तीर-वालुकावृष्टवर्षाजलोत्थितो विचित्रमृत्तिकागन्धः, तं जिघ्राणा जना भृशं हृष्टा बभूवुः। तेषां जनानां नवजलागमवार्तां निवेदयितुं प्रति-ग्रामं पटहवाद्यमवादयन्। नगरप्राकाराभिघातनवनदीजनितघोषं

निशि श्रुत्वा जना निद्रां परित्यज्य उदतिष्ठन्। अहमहमिकया प्रवाह-दर्शनत्वरया रथेन गन्तुमुद्यता जना रथेषु योजनीयानश्वान् त्वरा-जनितविभ्रमेण शकटेषु बबन्धुः। शकटमूलं प्रयाणोन्मुखाः केचित् शकटयोजनीयान् वृषभान् रथेष्वबध्नन्। अश्वालङ्कारसाधनैः गजानलश्चक्रुः। अलङ्कारार्हवारणवाजिनः तत्तदलङ्करणैर्नैवालश्चक्रुः। नारीमात्रमण्डनोचितैः कुसुमैः पुरुषा आत्मानममण्डयन्। पुरुषा-लङ्करणैकप्रयोजनाभिः मालाभिः स्त्रिय आत्मानमभूषयन्। नदी-दर्शनत्वरया लोकरीतिं,औचित्यं, धारणक्रमं च विस्मृत्य व्यत्यस्त-वेषधारिणो व्यत्यस्तवाहनाधिरूढाश्च सन्तो नदीं जग्मुः। क्रीडारतबालिकाकररचितवालुकागृहैः, पादपपतितामोदप्रसूनलग्न-भ्रमरैश्चोपशोभितं नदीतीरवालुकाप्रदेशं सलिलप्रवाहभरितमवेक्ष्य केचित् हृष्टा बभूवुः। अहमहमिकया गन्तुमशक्ता अन्ये नगरसौध मार्गमात्रशरणाः प्रवाहादर्शनसञ्जातखेदास्तत्रैव तस्थुः।

### ३. परस्त्रीलोलुपो नायकः *27-39*

अगरुधूपसम्बन्धेन नारीकुन्तलकुसुमानि सुवासितान्यासन्। कुसुममालामण्डितकण्ठाः पुरुषाः कमनीयवेषाश्चकाशिरे। वर्ण-सौगन्ध्यग्रथनवैखरीभिर्विशिष्टाः कुसुममाला वहन्तस्ते प्राकाशन्त। सीमन्तधार्यमाणस्रग्भिरसाधारणभूषणैश्च भूषितानां एकत्र सङ्ग-तानां जनानां सम्मर्दो नदीकूलोपर्यालक्ष्यत। जनसम्मर्दे काः

